॥ श्रीः ॥

# ॥ गद्यत्रयम् ॥

भगवद्रामानुजमुनिभिः

अनुगृहीतम्



कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः

श्रीमन्निगमान्तमहादेशिकैः

अनुगृहीतेन

भाष्येण समुद्भासितम् ।

॥ श्रीः ॥

# ॥ गद्यत्रयम् ॥

भगवद्रामानुजमुनिभिः

अनुगृहीतम

कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः

श्रीमन्निगमान्तमहादेशिकैः

अनुगृहीतेन

रहस्यरक्षान्तर्गतगद्याधिकारापरनाम्ना

भाष्येण समुल्लासितम्

परवस्तु–र. कृष्णमाचार्येण

प्राचीनबहुश्रीकोशपाठानुरोधेन परिष्कृत्य



श्रीरङ्गनगरस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

मुद्रापितम् ।

१९१०

मूल्यम्] [एका रूपिका.

॥ श्रीः ॥

# ॥ भूमिका ॥

---

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मोक्ष एव प्रधानभूत इति, निःश्रेयसशब्दव्यपदेश्य इति च निखिलाना-मप्यास्तिकानामभिमतोऽयमंशः । नास्तिकेतरे अवैदिका अपि नन्वभ्युपगच्छन्त्येव— अस्ति किंचिदलौकिकं श्रेयः, यद्देहपाता-दनन्तरमनुभवनीयमस्माभिरिति । तादृशं च मोक्षं प्रति स्वरूपत उपायतश्च बहुधा विप्रतिपत्तिरस्ति विदुषामद्य यावत् वैदिकानामेव । दूरे तावदास्तामवैदिकानामाशयविमर्शः । ये पुनर्वैदिकान्यौपनिष-दान्यार्षाण्यन्यानि च सप्रतिपन्नानि वचनजातान्यभिमन्यन्ते प्रमा-णानि, तेष्वेव किल कतिपये दुःखध्वंसो मोक्ष इति, इतरे पुनः सर्वांशासक्षये चेतःक्षय एव स इति, अन्ये तावद्ब्रह्मात्मैक्यमेव इति, परे खलु परिपूर्णब्रह्मानुभव एवायमिति परस्परं विसंवदन्त एव भूयसा दृश्यन्ते । उपायनिरूपणावसरेऽपि केवलात्कर्मणो मुक्तिरिति केचित्, ज्ञानान्मुक्तिरित्येके, भक्तेरियमित्यपरे, कर्मज्ञानसहकृताया भक्तेरमावितीतरे, प्रपत्तेरेवेति परे ॥

इत्थं मोक्षस्वरूपं तदुपायं चाधिकृत्य परस्परेण विप्रति-पद्यमाना अप्येते, पारत्रिकं किंचिदस्ति श्रेय इति, तदेवानश्वरमदुःखमिश्रमाशासनीयमधिगन्तुमस्माभिरित्यत्र च विषये लेशतोऽपि न वैमत्यमावहन्ति, प्रयस्यन्ति च स्वस्वाभिमता एवार्थाः श्रुत्या-

द्यनुगृहीता इति, स्थापयितुम् । यतश्चैते वेदप्रामाण्यादिवादिन परमास्तिका, अतश्चैतेषा स्वस्वाभिमतेष्वर्थेषु श्रुत्याद्यानुकूल्यमवश्याभिदर्शनीयमासीत्सवृत्तमिति सर्वेऽप्येते श्रीमन्ति बादरायणसूत्राणि भगवतीं गीतामुपनिषदश्च स्वस्वानुकूलतया व्याख्यातुमुपचक्रमिरे । तथोपक्रान्ताश्चैते कश्चित्साक्षात् कश्चित्परम्परया एकत्र निराबाधम् अपरत्र क्लेशसहमन्यान्यपि सप्रतिपन्नान्यैतिहासिकानि पौराणिकानि च वचनजातानि स्वस्वप्रमाणतया व्याचचक्षिरे । तथा व्याचक्षाणैश्च तैर्न खलु विना परमतोपमर्दमात्मनो मत भविष्यति प्रतिष्ठितमित्याशयानैस्तत्र तत्र परमतेषु श्रुत्यादिप्रमाणाना वैमुख्यप्रदर्शनम्, युक्तिविकलतानिरूपणम्, अनुभवविरुद्धत्वाप्रतिपादन च नियतमकामैरप्याचरितव्यमासीत् ॥

आधुनिका पुनर्विमर्शका सर्वेषामप्यवैदिकेतरेषामेषामेकमेव मतमिति, तत्तत्कालानुरोधेन च तथा तथा निरूपित तैरिति च वदन्त साम्प्रतिकेष्वास्तिकेषु पारस्परिक मतविरोधमुपशमयितुमुद्युञ्जते । सत्यम्, वयमप्यभिनन्दाम एव समुत्साहमेतेषाम्, यतो लोकस्य श्रेयोनिदानमैकमत्यमिति स्वयमप्यनुपश्याम । पर तु मोक्षं प्रति स्वरूपेण उपायेन च विवादकोटिमातिष्ठमानानामन्यमतमतिसरम्भेण युक्तिप्रमाणप्रदर्शनपुर सरमुपमृद्गता तेषामाशयस्य कालानुरोधित्वकल्पनापूर्वकमात्मानुमानेन आधुनिकाना तदैकमत्यस्थापनव्यसनिता सुनिपुणं विमृशता नास्माकमन्तरात्मा प्रसीदति सत्यपि मतविषयेऽभिप्रायभेदे न पुनरितरेतर विद्वेषो विभावनीय इति तु सर्वात्मना सादरमङ्गीकुर्म. । सर्वोऽपि तत्तन्मताभिमानी स्वकीय मतमेव सर्वत सारमभिमन्यताम् । तत्तत्पूर्वपुरुषैरभिद-

शितामेवायमप्यनुष्ठानपदवीमाश्रयतु । किमेतावता परस्य किंचिन्नाम हीयते, येनास्य शिर शूलमधिकमाविर्भविष्यति । सकलोऽपि स्वस्वानुसृतमतप्रवर्तकं महापुरुष भगवदवतारमसशयमाचष्टे, काममाचष्टाम्, का न क्षति । 'यद्यद्विभूतिमत्सत्त्व श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्व मम तेजोंऽशसभवम्' इति हि भगवानेव स्वय गायति । आवश्यकश्चाय विश्वास, यतस्तदानीमेव तत्तन्मताभिमानिना जनाना भविष्यति तत्र तत्र भूया-समादर ॥

एवमितरेतर विसवादेन विभिद्यमानेष्वपि मतेषु वैदिकानीति, श्रुत्यनुगृहीतानीति, वेदान्तिमतव्यपदेश्यानीति च सकलैरप्यास्तिकैरभ्युपेतानि अद्वैतविशिष्टाद्वैतद्वैतमतान्येव सप्रति सर्वत्र समुपलभ्यन्ते । मतानि चैतानि चिरादेव रूढमूलानि । अथाप्येतन्मतानुसारेण ब्रह्मसूत्रगीतादिक व्याचक्षाणा अत एव भाष्यकारप्रसिद्धिमुपगतास्त्रय एव पुण्यपुरुषा । यथा — अद्वैतभाष्यकृत श्रीशकराचार्या, विशिष्टाद्वैतभाष्यकारा श्रीरामानुजाचार्या, द्वैतभाष्यकर्तार श्रीमदानन्दतीर्थाचार्या । यथा अद्वैतिन श्रीशकराचार्यान् शिवस्य, यथा च द्वैतिन श्रीमदानन्दतीर्थाचार्यान् वायो, तथा विशिष्टाद्वैतिनोऽपि श्रीरामानुजाचार्यान् [1]शेषस्यावतार इति प्रमाणैरुपपत्तिभिश्च सर्वथा प्रतिपद्यन्ते ॥

अद्वैतभाष्यकारो हि अभेदश्रुतीर्निर्गुणश्रुतीश्च मुख्या परिगृह्णान, भेदश्रुतीना सगुणश्रुतीना च व्यावहारिकदशादिकल्पनया स्वयमेका गतिमभिप्रदर्शयामास । भेदश्रुतिमवलम्बमानस्य द्वैतभाष्य

1 विष्वक्सेनावतार, पञ्चायुधावतार इति केचित् । लक्ष्मीपतेरवतार इति तु परे ।

कारस्यापि अभेदश्रुतयो न स्वरसत्वाहिन्य. सपद्यन्ते । घटकश्रुतिब-लेन सर्वं समर्थयतो विशिष्टाद्वैतभाष्यकारस्य तु समस्तकल्याण गुणबोधनेन सगुणश्रुतय , तथा हेयगुणराहित्यप्रतिपादनेन निर्गुण-श्रुतय , विशिष्टैक्यविनिवेदनेन अभेदश्रुतय , स्वरूपतस्तत्त्वेषु भेदवादेन भेदश्रुतयश्च स्वरसत समुपपद्यन्त इति सर्वश्रुतिसामरस्य-सम्मतमत एवेति विशिष्टाद्वैतिन[1] ॥

ऐक्यानुसंधान भक्तेर्न पोषक भवति । तरतमभावावगमे हि उत्कृष्टे भविष्यत्यवरस्य महीयसी प्रीति । न च विना भगवति भक्तिं मोक्षो नाम केनचिदुपलभ्येत पुरुषार्थ । सगुणोपासनायास्तत्र प्रयोजकत्वकल्पनातो वर तस्यास्तत्र हेतुभाव श्रुत्यादिसिद्ध सर्व-थाभ्युपगन्तुम् । तथा च केनचिदप्यंशेन अभेदबुद्धिं दूरीकुर्वता पारमार्थिक द्वैतमवगच्छतैव ननु शक्यते भक्तिमता सुकृतिना पुरु षेण परम पुरुषार्थोऽयमधिगन्तुमिति द्वैतमिद ज्याय इति द्वैतिन ॥

अद्वैतभाष्यकारस्यापि पारमार्थिके द्वैत एव तात्पर्यम् । पर तु 'सर्वं क्षणिकम् । शून्य तत्त्वम्' इत्येव सर्वत समुज्जृम्भमाणे वेदविरुद्धे बौद्धसिद्धान्ते तदनुसारेण चिराज्जातस स्कारया लोकस्य मन प्रवृत्तौ जगत्कारणस्य एकस्य वापि वस्तुनः सत्यत्व नित्यत्व चावश्यसाधनीयमापतितमिति तात्कालिकजनवासना नुसारेण सर्वमिथ्यात्वम्, जगत्कारणभूतत्वेन एकस्य वस्तुन पर-ब्रह्मण सत्यत्व च स्थापितमद्वैतभाष्यकारेण । न ह्येतावता श्रीशकरा-

---

1 'मिथो भेद तत्त्वेष्वभिलपति भेदश्रुतिरतो विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती । इमावर्थौ गोप्तु निखिलजगदन्तर्यमयिता गिरिशो लक्ष्मीश श्रुतिभिरपराभि प्रणिदधे ॥ इति सङ्कल्पसूर्योदय कवितार्किकसिंह ।

चार्याणामत्रैव नैर्भर्यमित्यङ्गीकरणीयम् । कालेन च जगत्कारणस्य एकस्य वस्तुनः सत्यत्वप्रतिपत्तौ जगति रूढमूलायाम्, भगवति भक्तिमुद्रेचयितुं भेदं पारमार्थिकमभेदं च विशिष्टवेषेण विशिष्टाद्वैत-भाष्यकार उपपादयामास । ततश्च ततोऽपि भक्तिविशेषं परिपोषयितुमशक्तोऽप्यभेदमसहमानो द्वैतभाष्यकार सर्वात्मना भेदं परमुररीचक्रे । इत्थं च विमृश्यमाने वस्तुतत्त्वे त्रयाणामपि भाष्यकाराणा न खल्वेकमस्य युज्यते निराकर्तुम् । दृशा हि नाम व्यावहारिकी वा भवतु पारमार्थिकी वा । सगुणोपासना भगवति भक्तिश्च त्रयाणामपि भाष्यकृता संमतैव पुमर्थसमर्थकतया । एवं च त्रयाणामपि भाष्यकाराणा सति संभवति तात्पर्यैक्ये, तेषां परस्परपराङ्मुखीभावकल्पनापूर्वकमाधुनिकानामस्माकं मतप्रद्वेषदूषणादिकं सर्वथा बालिशकृत्यमेवेति नव्या विमर्शका. ॥

वस्तुतो वस्तुतत्त्वं यद्वा तद्वा भवतु नाम । न वयमचर्मचक्षुष. । ते ते यावद्बुद्धिबलं कयापि गमनिकया स्वैरं किमप्युत्प्रेक्षन्ताम् । नास्माकं किमपि वक्तव्यमत्र लक्ष्यते । इदं पुनर्न वयमनभिधातु पारयाम.— यदुत विशिष्टाद्वैतभाष्ये अधीयमाने तत्र तत्र भाष्यकृता योजितैर्भगवतो विशेषणैरनुसंधीयमानैर्यावती भगवति भक्तिस्फूर्तिरनर्गलमस्माकमाविर्भवति, तावती सा न किलोदेत्यपरयोर्भाष्ययोरधीयमानयोरिति तटस्थदृष्ट्यावस्थितायामकामैरप्यपरैरवश्यमिदमभ्युपेयं भवतीति । यथा च श्रीशंकरभाष्ये अधीयमाने शब्दा पुरस्तादथ परस्तादर्था प्रादुर्भवन्ति पुरतोऽस्माकम्, तथा श्रीरामानुजभाष्ये अर्था प्रथमत. पश्चाच्च शब्दा आत्मानमभिदर्शयन्ति । यथा वा प्रबलयुक्तिप्रमाणनिरूपणेन अद्वैतभाष्यम्, तथा भक्तिसु-

धारसानिष्यन्देन द्वैतभाष्यादपि विशिष्यते विशिष्टाद्वैतभाष्यमिति सकृदवलोकनेनैव, दृढ विश्वसिम, सहृदय स्वयमेव नूनमवगमिष्यति ॥

एवमखिलैरप्यभिवन्दनीयमहिमसु त्रिषु भाष्यकारेषु विशिष्टाद्वैतभाष्यकृतो भगवद्रामानुजाचार्या एव प्रकृतस्य गद्यत्रयाख्यस्य प्रबन्धरत्नस्य प्रणेतार ॥

एते किल इतश्च प्राक् प्रायो [1]नवम्या शताब्द्या भगवतो यामुनाचार्यस्य पौत्र्या कान्तिमत्यपराभिधानाया भूदेव्या हारीतकुल तिलकात्महात्मन केशवसोमयाजिन श्रीभूतपुर्या लब्धजन्मान, बाल्य एव सर्वाण्यपि शास्त्राणि विशिष्य श्रीयादवप्रकाशयतिवर्याद्द्वैतग्रन्थाश्च समग्रमधीत्य भगवदनुग्रहेण तदा तदा स्वयमपसृत महापद प्रकटीकृतपरिशुद्धनिजप्रभावा, अनेकेभ्य आचार्येभ्यो यथासप्रदाय तास्तानर्थविशेषानात्मना समधिगत्य सर्वदा भगवत्कैकर्यैकप्रवणमनसो भगवद्गुणानुभवसमधिगतपरमानन्दनिर्भरा, कालेन च प्रव्रज्या परिगृह्य श्रीरङ्गादिषु दिव्यदेशेषु भगवत्सेवैकपरायणा परवादिविधूननचणवचोगुणा, सुचिरमध्यात्मविद्या यथासप्रदाय बहुभ्य शिष्येभ्य उपदिश्य [2]स्वाश्रिताननेकानुज्जीवयन्त, सर्वात्मना विशिष्टाद्वैतसिद्धान्त सर्वतोमुखमकुतोभय च विधाय वेदार्थ-

1 एकानविंशत्युत्तरशताधिकचतु सहस्रतम पिङ्गलनाम्नि कलेर्वत्सर चैत्रमासि शुक्लद्वादश्या भृगुवासरे आर्द्रानक्षत्रे कृतावतारा । क्रिस्तीयसवत्सर = 1019

2 ' रामानुज सप्तशतैर्यतीना पीठैश्चतु सप्ततिभि समेत ।
एकान्तिभिर्द्वादशभि सहस्रै श्रीरङ्ग आस्ते यतिसार्वभौम ॥

संग्रहादीनि प्रबन्धरत्नान्यनुगृह्णन्त , शिष्यपरम्परया तेषामिव स्वसिद्धान्तस्य च सर्वतोऽपि प्रचार समुत्कर्षं च भगवन्तं प्रार्थयमाना, सर्वथा परहितैकप्रवणा परार्थैकजीविता परमपुरुषैकदैवता परकलितप्रशसानिन्दादिपराङ्मुखा पर धाम प्रपेदिरे ॥

एतैश्च कृतेषु प्रबन्धरत्नेषु श्रीभाष्यव्यपदेशविख्यात श्रीब्रह्मसूत्रभाष्य विशिष्टाद्वैतसिद्धान्तानुसारेण तत्तदर्थप्रतिपादक प्रबलाभियुक्तिभिरप्रतिहतैश्च प्रमाणै परमतनिराकरणचणगुणगणमखिलसूत्राक्षरात्यन्तानुगुणमपरैरप्यभिनन्दनीयसुमधुरवचोगुम्भ विलसति विश्वतोऽप्युदञ्चितभगवद्गुणानुसधानसरसरमणीयम् ॥

श्रीगीताभाष्यमप्येतैरनुगृहीतमित्यर्यैव सुखावसेयविषयजातम् ॥ .

वेदान्तसार इति, वेदान्तदीप इति च द्वावेतेषामेवापरौ ग्रन्थौ, अतीव सग्रहेण किंचिदिव विस्तरेण च श्रीबादरायणसूत्राणि श्रीभाष्याकलितफक्किकया अक्षरतोऽपि व्याचक्षाणौ, ब्रह्मसूत्रवृत्ती भवत ॥

वेदार्थसग्रहनामकमेतद्विरचित प्रबन्धरत्न तु विशिष्टाद्वैतमतानुरोधेन व्याख्येयानामुपनिषदा व्याक्रियाप्रक्रियादिशाप्रदर्शनपरम् । अत एव श्रीभाष्यादिभिरपि गतार्थतामालोच्य श्रीभाष्यकारैरुपनिषदा न व्यरचि भाष्य पार्थक्येन ॥

नित्यग्रन्थाभिधानोऽप्येक प्रबन्ध श्रीभाष्यकारैरारचित । तत्र च श्रीवैष्णवसमयिनामहरहरनुष्ठेया धर्मा कर्मस्वरूपाणि च सन्ति साधु प्रतिपादितानि ॥

प्रकृत च गद्यत्रयाख्यमत्युत्तम प्रबन्धरत्न श्रीभाष्यकारै स-

दाचार्यसंप्रदायागतद्वयवचनपूर्वकमात्मकृतस्य भरन्यासस्य, स्वकृतप्रपत्तिप्रसन्नदिव्यदंपतिप्रकाशितस्य अभयप्रदानस्य च स्वरूपमन्यान्प्यवगमयितुमुपनिबद्धमिति संप्रदायविद. । एकैकस्यापि गद्यस्य पार्थक्येन विषयप्रयोजनादिकं तु तत्तद्भाष्यारम्भ एव स्फुटं प्रकटीकृतमिति नेह तत्र विस्तरः स्वीक्रियते ॥

वस्तुतः सर्वदापि भगवन्महिमानुसधानैकरसिकानां श्रीभाष्यकाराणा श्रीभाष्यगीताभाष्यादिष्वगत्यापतितेन परमतदूषणकोलाहलेन कियतश्चन क्षणान् भगवद्गुणानुभवपरमानन्दपराङ्मुखीभावक्लिश्यमानमानसानामखण्डधारासारनयेन अविच्छेदभगवद्गुणानुभवप्रकारमुखैरुचार्य भगवत्प्रसादप्राप्तिमुपवर्ण्य कृतार्थभावमात्मनः कलयितुकामानां हृदयपय.पयोधेरनर्गलमभितः प्रसरन्ती सुधालहरिपरंपरा किल श्रीमदिद गद्यत्रयमित्यपि वयमुत्पश्याम ॥

एतद्गद्यत्रयभाष्यकर्तारश्च श्रीमन्निगमान्तमहादेशिका. कलेरेकसप्तत्यधिकशतत्रयोत्तरचतु सहस्रतमे शुक्लनाम्नि संवत्सरे नभस्यमासि श्रवणनक्षत्रे श्रीकाञ्चीनगरपरिसरे हिमोपवनाभिधाने देशे कृतावताराः । एतेषां च मातरपितरौ श्रीमती तोतारम्बा, श्रीमाननन्तसूरिश्च । 'अयं गुरुर्मे प्रत्युत्पन्न शक्तेर्गर्भे सुलभ्य ते । मम द्वादश तस्येह वेदानभ्यसतो गता.' इत्युक्तप्रकारेण लोकविलक्षणतामप्रकाशनाय एतैरपि द्वादश परिवत्सरान् गर्भे स्थितं मातु' ॥

एते च तन्मातापितृस्वप्नवृत्तान्तानुरोधेन[1] श्रीमद्वेङ्कटाद्रिना-

1 [illegible] श्रीमदनन्त[illegible], [illegible] कीया [illegible] अष्टाशीति, तेन च दत्ता [illegible] तोतारम्बा स्वयमभिवर्दिते च ताभ्या दृष्ट [illegible] ।

धम्य श्रिय पतेर्घण्टाया अवतार इत्यखिलानामप्यास्तिकानामभिप्राय । अमु च विषय स्वयमेव श्रीमदाचार्या सकल्पसूर्योदये सकलयामासु[1] ॥

बाल्यादारभ्यैव सर्वत्र बुद्धिवैभव प्रथय भगवति भागवतेषु च भक्तिं शान्तिं दान्तिं च बिभ्राणैरेतैर्विंशतिवयस्कैरेव सद्भिर्विश्वा अपि विद्या वादिहसाम्बुवाहादात्रेयश्रीरामानुजाचार्यवर्यात्स्वमातुलाद धिगता[2] ॥

अनन्तर च यथासम्प्रदायमधिगतविशिष्टाद्वैतमतसारसर्वस्वै श्रीमदाचार्यै श्रीकाञ्चीश्रीरङ्गादिषु दिव्यदेशेषु भगवत्सेवापरायणैर्भागवतप्रावण्यपरिपूर्णे[3] सुचिरमवस्थाय श्रीभाष्यादिप्रवचनमाचरद्भिरनेके कृतमतय शिष्यास्तत्त्वहितपुरुषार्थोपदेशेन धन्यजन्मता मवापिता । पराजिताश्च बहव परवादिनस्तदा तदा प्रमाणमवलवा चोयुक्तिनिकरेण सर्वत सारेण ॥

एतैश्च न केवल सस्कृतभाषायाम्, पर द्राविडभाषायामपि मणिप्रवालरीत्या शुद्धगाथारूपेण च बहवो ग्रन्था[4] व्यरच्यन्त ।

---

1 विन्नामिनी विबुधवैरिवरूथिनीना पद्मासनप परिचारविधौ प्रयुक्ता । उत्प्रेक्ष्यत बुधजनैरुपपत्तभूमा घण्टा हरे समजनिष्ट यदात्मनेति ॥

2 रामानुजार्यादात्रेयो मातुलात्सकला कला । अवाप विंशत्यब्दे य इति श्रीकुमारवरदगुरव । आचार्यैरपि सकल्पसूर्योदये विशत्यब्द विश्रुतनानाविधविद्यविशद्धार श्रावितशारीरकभाष्य इति स्वयमुक्तम् ॥

3 कदाचिदपचिकीर्षया कैश्चन कुदृष्टिभिद्वार लम्बितायामुपाबहि स्वाविरसि सभायाम् कर्मावलम्बिन कौचित्कचित् ज्ञानावलम्बिन । वय तु हरिदासाना पदरक्षावलम्बिन इति श्रीमदाचार्यैरभिहितम् ॥

4 सस्कृतभाषायाम्— साहित्य चतुर्विंशतिसर्गात्मक यादवाभ्युदय

काव्ये वा नाटके वा स्तोत्रजाते वा यत्र कुत्र वा एतेषां पदविन्यास सर्वात्मना भगवति भक्तिं स्वसिद्धान्तसारं च क्रोडीकुर्वन्नेव भवतीति मन्त्रानुभाविकमिदमवलोकयितृणाम् ॥

एतेषां वैदुष्यं परवादिनिरसनवैभवं चावलोक्य तदानीतना पण्डिता एव 'कवितार्किकसिंह' इति बिरुदेन श्रीमदाचार्यान् सम्भावयन् ॥

एकदा च श्रीकृष्णमिश्रवादसमयप्रकटितपराक्रमपरितुष्टेन श्रीरङ्गनाथेन श्रीमदाचार्येभ्य 'वेदान्ताचार्य'[1] इति, श्रीरङ्गनायिकया 'सर्वतन्त्रस्वतन्त्र' इति च बिरुदं प्रसादितमर्चकमुखेन ॥

सर्वदा सदाचारानुष्ठानैकबद्धश्रद्धाना च श्रीमदाचार्याणामुञ्छवृत्त्या देहयात्रां निर्वर्तितवतामनितरसाधारणं नैस्पृह्यं ननु व्यक्त-

नाम महाकाव्यम्, श्रीरङ्गनाथपादुकामहिमवर्णनपरं सहस्रपद्यात्मकं पादुकासहस्रम्, सुभाषितनीवी, हंससन्देशकाव्यम्, सङ्कल्पसूर्योदयं नाम महानाटकम्, हयग्रीवस्तोत्रादीनि सहस्राधिकश्लोकसङ्कलितानि बहूनि स्तोत्राणि, द्रमिडोपनिषत्तात्पर्यरत्नावलीप्रभृतीन्यन्यानि च कतिचन । वेदान्ते, न्यायसिद्धाञ्जनम्, न्यायपरिशुद्धि, अधिकरणसारावलि, तत्त्वमुक्ताकलाप, सर्वार्थसिद्धि, शतदूषणी, चक्रारसमर्थनम् । वेदान्ते व्याख्यानरूपाणि, गीताभाष्यव्याख्या तात्पर्यचन्द्रिका, श्रीभाष्यव्याख्या तत्त्वटीका, गीतार्थसङ्ग्रहरक्षा, स्तोत्रभाष्यम्, गद्यत्रयभाष्यम्, ईशावास्योपनिषद्भाष्यम् । मीमांसायाम्, सेश्वरमीमांसा, मीमांसापादुका । अन्ये च श्रीवैष्णवसमयाचारादिप्रतिपादका सच्चरित्ररक्षानिक्षेपरक्षापाञ्चरात्ररक्षाप्रभृतय । द्राविडभाषायां च—श्रीमद्रहस्यत्रयसारप्रभृतय द्वात्रिंशद्रहस्यग्रन्था, 'देशिकप्रबन्ध' इति प्रसिद्धिमुपगतो गाथात्मको द्राविडप्रबन्ध । इत्थं च सकलस्य तैर्विरचिता प्रबन्धा एकविंशत्युत्तरशतम् । प्रायेण सर्वेऽपि ग्रन्था मुद्रापिता ।

1. 'श्रीवेङ्कटनाथार्य' इति सांस्कारिकं नाम ।

मेव वैराग्यपञ्चकावलोकनेन[1] ॥

किं बहुना— नास्ति कश्चिदेतावति जगति समुत्पन्न, य खल्विमानाचार्यान् पाण्डित्यप्रकर्षेण मेधाविलसितेन ग्रन्थकरणकौशलेन प्रमाणप्रदर्शनसामर्थ्येन वैराग्यसारेण भगवद्भक्तिभारेण चातिशयितु प्रभवति । अत एव किलैते श्रीमदाचार्या, कविभि कवय इति, दार्शनिकैर्दार्शनिका इति, वेदान्तिभिर्वेदान्तिन इति, निबन्द्धभिर्निबन्द्धार इति, कर्मठै कर्मठा इति, ज्ञानिभिर्ज्ञानिन इति, भक्तैर्भक्ता इति, प्रपन्नै प्रपन्ना इति, वादिभिर्वादिन इति, शान्तै शान्ता इति च बहुधा सभाव्यन्ते ॥

एतैश्च श्रीमदाचार्यवर्यैरस्य गद्यत्रयस्य सत्यपि प्राचीने व्याख्याने क्वचित्क्वचित्तत्वासारसमालोचयद्भिरेव नव्यमिद भाष्यमवतारितमात्मनेति एतद्भाष्यस्थकतिपयसघट्टकपर्यालोचनायामवगम्यते । अस्य च भाष्यस्य गुणनिरूपणम् 'नन्विद श्रीमन्निगमान्तमहादेशिकैरनुगृहीतम्' इत्येतावद्विलेखनमात्रेणैव, मन्यामहे, सपूर्णमाचरितमस्माभिरिति ॥

एतादृशस्य च सभाष्यस्यास्य गद्यत्रयस्य नासीदेतावता शुद्ध च समीचीन च किमपि मुद्रणमिति सर्वथा विषादस्थानमेत-

---

1 उञ्छवृत्तिमातिष्ठमाना आचार्या कदाचित् राजकुललब्धप्रतिष्ठै श्रीविद्यारण्यस्वामिभिस्तत्रागमन प्रार्थिता पञ्च पद्यानि उत्तरतया प्राहिण्वन् । तत्पद्यसमुदायस्य वैराग्यपञ्चकमिति व्यपदेश । तत्राद्यमादिम श्लोक — क्षिति किमनल भवदनलमौदर बाधितु पय प्रसृतिपूरक किमु न धारक धारसम् । अयममलमलक पथि पटच्चर कच्चर भजन्ति विबुधा मुधा ह्यहह कुक्षित कुक्षित ॥

दस्माकम् । पूर्वं द्विरा-प्रलिपिभिर्मुद्रितमपीदं सम्यक् शोधितमिति वक्तुं न पार्यते । कान्त्या च क्रियतश्चन कालात्प्राक् कैश्चन बहुविद्भिः सशोध्य सम्यगा-प्रलिपिभिरारब्धमुद्रणमप्यर्धावसितमसमग्रसमाप्तमवतिष्ठत इत्यतितरामिदं शोकास्पदमतद्भ-थराद्विणा विदुषाम् ॥

तदिदं सर्वमालोच्य, अनेकान् श्रीकोशानालोक्य, निधार्य समीचीनं पाठम्, यावच्छक्ति प्रमादरहितं मुद्रापयित्वा, प्रबन्धरत्नमिदं विदुषां प्रीत्यै आत्मनः कृतार्थभावाय च बहिरवतारयाम ॥

यावच्छक्ति परिशोधितेऽप्यस्मिन् ग्रन्थे अस्मदीयबुद्धिभ्रमोषादिना यदि स्युरशुद्धयः, प्रार्थयामहे, तर्हि ताः स्वयं परिनिर्मृज्य कृपयास्मान् बोधयन्तु, येन द्वितीयस्यां मुद्रणायां वयमतीव जागरिष्याम ॥

रायपेट्ट. चक्रवर्ति. कृष्णमाचार्यः ।





कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥

SRI VANI VILAS PRESS SRIRANGAM

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# ॥ गद्यत्रयम् ॥



प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् ।
प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुतिम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्य-

॥ श्री ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥



प्रख्यातश्रुतविभवान्गुरूनशेषा-
नाश्रित्य प्रणयति वेङ्कटेशसूरिः ।
लक्ष्मीशप्रपदनवैभवप्रतिष्ठां
रागान्ध्यप्रशमकरीं रहस्यरक्षाम् ॥ १ ॥

लक्ष्मीपतेर्यतिपतेश्च दयैकधाम्नो-
योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।
प्राच्यं प्रकाशयतु व. परमं रहस्यं
सवाद एष शरणागतिमन्त्रसार ॥ २ ॥

अत्र भगवान्भाष्यकार सदाचार्यसप्रदायागतद्वयवचनेन स्वयमनुष्ठितन्यासाख्यविद्याविशेष स्वानुबन्धिसजिजीवयिषया यथावत्प्रकाशयन्, 'सीतामुवाचातियशा राघव च महाव्रतम्' 'सीतासमक्ष काकुत्स्थमिद वचनमब्रवीत्' इत्यादिप्रकारेण श्रीप्रपत्तितदनुग्रहपूर्वक स्वस्य भगवता सजात स्वयप्रयोजनसवादविशेष निबध्नाति । प्रतिवचनानास्तु शरणागतिप्रत्रीकृतशरण्याभिप्रायविशेषोन्नयनेन निबध्यत इत्येके । इह 'प्रपद्ये' इत्यन्त श्रीमच्छब्दाभिप्रेतप्रदर्शनम् । 'अखिल—' इत्यादिकम् 'अशरण्यशरण्य' इत्यन्त नारायणशब्दार्थविवरणम् । तन्मध्ये 'श्रीमन्नारायण' इति हि पठनमुपायोपेयवाक्ययो सिद्धरूपप्रधानाभिव्यञ्जनम् । 'अनन्यशरणोऽहम्' इत्युत्तमपुरुषाभिप्रेताधिकारिविशेषोक्ति । 'त्वत्पादारविन्दयुगलम्' इत्यादिकमन्यर्थत स्वरूपतश्च मान्त्रवर्णिकपदत्रयज्ञापकम् । एव प्रधानत मेन सिद्धोपायेन सिद्धप्राप्येन च सह महावाक्यार्थपर्यवसानभूमितया शाब्द प्राधान्यवतान्साध्योपायाशा दर्शित । भाष्यप्राप्यमपि 'पारमार्थिक—' इत्यादिना सक्षिप्तमिति ज्ञापयितु मध्ये 'द्वयम्' इति व्याख्येयसमाख्यानिर्देश । 'पितरम्—' इत्यादिभिर्जितन्ताविशेषभगवद्गीतादिपठितैरुक्तमन्त्रवादैकरूपबृहणग्रन्थै, प्रस्तुतोपायविशेषपरिग्रह शरण्यस्वभावानुसधानपूर्वक प्राप्यविरोधिनिवृत्तिप्रार्थनाश च प्रपञ्चयिष्यमाणद्वयार्थतया सग्रहेण सकल्पयाह । 'मनोवाक्कायै —' इत्यादिभिरर्थक्रमेण नम शब्दार्थविवरणपूर्वक चतुर्थ्यभिप्रेतपरमपुरुषार्थप्रार्थना प्रकाश्यते । प्रतिवचनवाक्यैस्तु, प्रकृताधिकारिनिर्भरत्वाय स्वीकृतभरस्य शरण्यस्य स्वाभाविकदयार्द्रमुत्तरखण्डोत्तपरमफलाङ्कुरकल्पमभिप्राय व्यवृणुत । अत कृत्स्नमिद गद्य द्वयविवरणमिति साधीयान्सप्रदाय । इह च भगवत्प्रपदन समुन्नतस्य सम्यक्ज्ञान

मपादनपुरुषकारपुरस्कारादिकं पूर्वकृत्यम् । साङ्गस्वरक्षाभरसमर्पणं तत्कालकृत्यम् । स्वनिष्ठानुसंधानपूर्वकं स्वाधिकारोचितकैङ्कर्यादिकमुत्तरकृत्यम् । शरण्यस्य तु पूर्वकृत्यं पुरुषकारप्ररोचनादिकम् । तत्कालकृत्यं समर्पितसर्वभरस्वीकरणम् । उत्तरकृत्यं तु स्वयप्रयोजनभक्त्यादिप्रदानाम्तिमदशाप्रबोधनप्रभृति परिपूर्णकैङ्कर्यरूपमुक्तिप्रदानपर्यन्तम् । एतदखिलमिह शब्दतोऽर्थतश्च यथास्थानमनुसंधेयम् । किंच – सम्बोधनं परं तत्त्वं न्यासोक्त्या परमं हितम् । प्रार्थनाभिश्च परमं पुमर्थं इह दर्शितं ॥

नन्वेवं सकलफलप्रदो भगवानेव तत्प्रपत्तिसिद्धयथमाश्रीयताम् । किमिह लक्ष्मीप्रपदनेन? मैवम्, यदि भगवत्प्रपदनमिदानीं शक्यमिति निश्चिनुयात् तदा मोक्षार्थमेव तदुपाददीत, न पुनस्तदर्थं तत्प्रयुञ्जीत, अनिश्चिते तु शक्यत्वे नतराम् । ननु विदितश्रेयःप्रपत्तिशास्त्रार्थ , स च सुकर , तदा स्वयमेव मोक्षार्थमनुष्ठीयताम्? मैवम्, दुष्करकर्माद्यङ्गनिरहात् सौकर्येऽपि महाविश्वासाद्यङ्गकप्रपत्तिस्वरूपं 'श्रूयते किल गोविन्दे' 'सत्यं शतेन विघ्नानाम् इति न्यायेन सम्भवत्प्रतिबन्धे सत्यपि दौष्कर्यात् । उक्तं च— 'उपायः सुकरः सोऽयं दुष्करश्च मतो मम इति । अत 'स्थिते मनसि इत्यादिप्रक्रियया विषयतः स्वरूपतश्च विशिष्टाधिकारप्रपत्त्यनुष्ठाने प्राप्याभिलाषप्रापकाध्यवसायप्रापकान्तरानन्वयानुकूल्यानुगुणमनःसमाधानार्थमिह तत्प्रार्थनं युक्तम् । एवमपि सुकृतादिदोषैरेव लक्ष्मीप्रपत्तिवत् भगवत्प्रपत्तिरप्यस्त्विति मैवम् तदथ एव ह्यय सुकृतविशेष । न चात्रापि पूर्ववदशक्यत्वचोदना, स्वानन्दनुद्वर्थं पूर्व तावन्मात्रशक्तिप्रदानात् । तद भिप्रायेण ह्युक्तं भगवता शौनकेन— 'शान्तः पापः प्रायश्चिता प्रपन्नश्रियत श्रियम्' इति । गीतार्थेऽपि च— 'यामालम्ब्य सुखेनेमं दुस्तरं हि गुणादधिम् । निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणा ॥' इति । मा चैव मन्यमार— 'प्रायश्चित्तप्रसङ्गः तु महापापसमुद्भवे । मामसा दवदेवस्य महिषीं शरणं श्रयेत् ॥' इति । न चैव [1]तदर्थं प्रपत्त्यन्तरापेक्षयानवस्थाप्रसङ्ग ,

1 तदर्थमपि प्रपत्त्यन्तरापेक्षायां.

स्वतन्त्रसकल्पेन व्यवस्थितत्वात्सामग्रीविशेषाणाम् । सामग्रीप्रवाहानवस्था सर्वस्मिन्नपि कार्ये सर्वैः सिद्धान्तिभिः स्वीकर्तव्या स्वीकृता चेति नासौ दोषः ॥

अतोऽपवर्गार्थभगवत्प्रपत्तिसिद्धये 'यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥' 'विद्यास्त्वाश्रयन्त मामादित्यस्य सनातनम्' इत्यादिभिः सर्वविद्याप्रवर्तकतया तत्तद्विद्यात्वेन निर्दिष्टा सम्यक्ज्ञानव्यवसायोपायादिप्रदाने विशेषाधिकारवर्ती मनुप्रहैकस्वभावा श्रियमादौ प्रपद्यते—**भगवदिति** ॥ अत्र 'अशरण्यशरण्याम्' इति वक्ष्यमाणस्योपयुक्ता विशेषा नवभिः पदैः ख्याप्यन्ते । ननु 'विष्णुपत्नी विष्णुवल्लभा' इत्यादिषु भास्करेण प्रभेव पत्यासौ निरूप्यताम् । यथोक्तं ताभ्यामेव— 'अनन्या हि मया सीता' 'अनन्या राघवेणाऽहम्' इति । इह तु तथा तन्निरूपणे व्याख्येयस्थे किमिति भगवतासौ निरूप्यते? प्रस्तुतोपयोगार्थमिति ब्रूमः । भगवदभिमतानुरूपत्वे हि, तस्यास्तेनेच्छाविघाताभावात् तद्विरुद्धेच्छाविरहाच्च ततोऽस्मदिष्टं सिध्येत् । प्रभया प्रभावत इव व्याख्येयगतं तथा तस्य निरूपणमपि श्रीवल्लभादिव्यपदेशेन दर्शयिष्यति । इदं च परस्परनिरूप्यत्वमन्यत्राप्युक्तम्— 'तदेतत्सूक्ष्ममिथुनं परस्परविचिह्नितम् । आदावन्योन्यमिश्रत्वादन्योन्यप्रतिपादकम् ॥' इति । आदावन्योन्यमिश्रत्वात् 'शान्तानन्त—' इति प्रकारेण नित्यमन्योन्यसंबद्धत्वादित्यर्थः । न च परस्परनिरूप्यत्वेऽन्योन्याश्रयदोषः, प्रभाप्रभावतोरिव प्रमाणतः प्रकारान्तरेणापि तयोर्निरूपणात् । अत्र द्विपदंकाद्याक्षरगताभ्यां भगवन्नारायणशब्दाभ्यां 'शुद्धे महाविभूत्याख्ये' 'नरसंबन्धिनो नाराः' इत्यादिभिर्निरुक्ताभ्यामुभयलिङ्गत्वमुभयविभूतिमत्त्वं च ख्याप्यते । भगवच्छब्दस्य 'उत्पत्तिं प्रलयं चैव' इत्यादिप्रदर्शितक्रमेण 'अन्यत्र ह्युपचारतः' इत्यौपचारिकप्रयोगप्राचुर्यमस्ति । नारायणशब्दस्य तु तन्नास्ति । कारणवाक्येषु चानन्यथासिद्धनिःसंदेहविशेषनिर्धारणोपयुक्तश्चायम् , 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः' इत्यादिश्रुतेः । 'सहस्रशीर्षम्' इत्यनुवाके

च तेनैव सर्वपरविश्रावियनिर्धारणम्। अतस्तेनात्र विशेष्यस्य निर्देशः । ततश्च तद्विशेषणतया भगवच्छन्दोऽनादतारूढिरुभयलिङ्गत्वव्यस्त्यर्थमेव ॥

उक्तप्रकार भगवतः स्वरूप निरतिशयानन्दतया मुक्ताना नित्या नामिव च स्वस्याप्यभिमतम्; ततोऽपि स्ववल्लभायाः स्वरूपादिक-मित्यभिप्रायेण— अभिमतेत्युक्तम् । श्रूयते हि— 'प्रिय लोके देव जुष्टामुदाराम्' इति । [1]निरवधिकक्रीडादिमता निरुपाधिकदेवेन भगवता प्रीतिविषयीकृतामित्यर्थः । सापेक्षनिरपेक्षयोर्निरपेक्षप्रतिपत्तेः, बाधकस्य चाभावात्, औचित्यातिशयात्, तथैव वेदवि(द्वा)त्स्यातत्वाच देवशब्दोऽत्र वासुदेवपरः । देवैर्जुष्टामिति मन्दम् । स्मर्यते च—'प्राणेभ्योऽपि गरीयसीम्' इति, 'अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेय स च धर्मात्मा मुहूर्तमपि जीवति ॥' इति च । अभिमतत्वेऽप्यननुरूपत्वम्, अनुरूपत्वेऽप्यनभिमतत्वं च, लोके दृष्टमिति तद्व्यवच्छेदार्थमुभयोक्तिः; यथा—'चकर्थ यस्या भवनम्' इत्यादिश्लोकयोः । लोके केनचिदाकारेणाभिमतानुरूपत्वम्, आकारान्तरेण तदभावश्च, क्वचिद्दृश्यते । तद्युदासाय स्वरूपरूपादिसर्वोक्तिः ॥

तत्र स्वरूपस्य गुणत्वायोगात्, स्वरूप रूप गुण. विभवः ऐश्वर्य-शीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्चेति द्वन्द्व । अनुरूपत्वमिह सवन्धे सति प्रकृष्ट साहश्यम्; यथा— 'परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः' इति । रत्नकाञ्चनमुक्ताप्रवालादेरिव स्वसबन्धेन शोभातिशयहेतुत्वरूपमौचित्य वा, यथा— 'अतीव रामः शुशुभेऽतिकामया विभुः श्रिया विष्णुरिवामरेश्वरः ।' इति, 'तुल्यशीलवयोवृत्ता तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥' इति च । अत्र वयोलक्षणयोस्तुल्यशब्द औचित्यपरः, दपत्योर्न्यूनाधिकवयस्त्वात्, स्त्रीपुंसलक्षणाना च भिन्नप्रकारत्वात्, तत्सहोक्त्या शीलादिष्वपि औचित्यपर एव, तुल्यश-

1 निरवधिकक्रीडोपयुक्तया देवेन ..

ब्दोक्तार्थस्य 'अर्हति' इति समुदायनिर्देशाच्च । यद्वा, अर्हत्वस्य साधक तया तुल्यशब्देन सदृशत्वमुच्यते । वयस सदृशत्वम् "घनवनकयुती युव द्वयामपि मुग्धद्वयाम् इत्युक्तमासन्नतरत्वम् । लक्षणस्य सदृशत्व पतिरूप णवत्सर्योत्कर्षव्यञ्जकत्वम्, येन स पुरुषोत्तम, सा च सर्वलक्षणसपन्ना नारीणामुत्तमेत्युच्यते । 'सदा तवैवोचितया तव श्रिया' 'आत्मु स्वैरनु रूपरूपविभवै' इत्यादिकमनुसधेयम् ॥

भगवत्स्वरूपादेरेतत्स्वरूपादीना यथाक्रममानुरूप्यमुक्तम् । तत्र स्वरूप स्वासाधारणधर्मनिरूप्य धर्मि, तस्यानुरूप्य 'नान्ययैषिन्यते परम्' इत्यादिषु ग्राह्यम् । रूप 'हिरण्यवर्णाम्' इत्याद्याम्नातम्, तस्यानुरूपत्व हि अनिरमणीयत्वनित्यत्वाप्राकृतत्वादिविशिष्टमस्तुतत्वम् । 'नित्यैव' इत्यु पक्रम्य 'विष्णोर्देहानुरूपा वै करोत्येषात्मनस्तनुम्' इति च लिखितम् । अत्र रूपादनन्तरो गुणशब्द सौन्दर्यादिदिव्यविग्रहगुणपर, 'गुणाद्रूप गुणाद्वापि प्रीतिर्भूयो व्यवर्धत' इतिवत् । विग्रहगुणाना स्वरूपगुणाना च पृथङ्निर्देश प्रीत्यतिशयद्योतनार्थ । विभव 'फणिपति शय्यासन वाहनम्—' इत्यादिभिरुक्त विभूतिद्वयम्, यथोक्तम्— 'अस्या मम च शेष हि विभूतिरुभयात्मिका' इति । उक्त च श्रीरामाभिश्रे — 'उभ याधिष्ठान चैक शेषित्वम्' इति । एव द्वयोर्विभवस्यैकत्वेऽपि तदानुरूप्य वचनम् अन्यूनानतिरिक्तविभूतिमत्परम् । यद्वा, 'अर्थो विष्णुरिय वाणी' इत्यादिभिर्लौकिकदर्पणान्वयन विभव निर्दिष्टो विभूत्यद्य । स्वासाधारण विभूत्यादिक च विभव । 'निधि पद्मा निधि शङ्खश्चतुर्दन्तो गजस्तथा । कल्याणसर्प पञ्चास्य शिक्षितो गृहरक्षक' । इत्यादि च पुराणप्रसिद्धमा नुरूप्यमिह यथार्ह ग्राह्यम् । ऐश्वर्ये शीले च अन्वितेनादिशब्देन परत्व- सौलभ्यौपयिकगुणवर्गद्वयसग्रह, 'सर्वैश्वर्यगुणोपेता नित्य तद्धर्मधर्मिणी' इत्यादिभिरेतत्सिद्धि । अत्र परस्परेच्छानुविधायित्वात् ऐश्वर्यमनुरूपम् । शील च गुहादिषु रामस्येव, त्रिजटादिषु तस्या प्रसिद्धम् । एव पतिपा रार्थ्ययुक्तत्वादिनरसर्वशेषित्वान्वितानामन्येषामपि गुणानामानुरूप्य सुगमम् ।

## शीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणा

'ब्रह्मेशादिसुरव्रज सदयितत्वद्दासदासीगण' इत्युक्तेभ्य सातिशयसंख्यातगुणेभ्यो व्यावृत्त्यर्थमाह—अनवधिकातिशयासंख्येयेति ॥ अनवधिकत्वमिह सापेक्षयोत्कर्षावधिराहित्यम् ॥

ननु भगवत एवैश्वर्यमनवधिकातिशयम्, 'तमीश्वराणां परमं महेश्वरम्' 'सर्वेश्वरेश्वर कृष्ण' 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'न त्वत्समोऽस्त्यभ्यधिक कुतोऽन्य' इत्यादिभिस्तथात्व । 'पुप्रधानेश्वरेश्वरी' इति नाम तु स्त्रीप्रत्ययानुपपत्ते श्रुत्यादिविरोधाच्चान्यथा नेयम्—पुप्रधानयो गोबलीवर्दन्यायेन विशेषत उक्तानां ब्रह्मादीश्वराणां च भगवान् ईश्वर, तत्पत्नीयम्—इति । 'पुयोगादाख्यायाम्' इति स्त्रीप्रत्ययोपपत्ति । पुप्रधाने स्वशक्त्यैव नियच्छति, ईश्वरं च वाल्लभ्येनेति निर्वाहो निरूप क्लिष्टश्च । 'ईश्वरीं सर्वभूतानाम्' इत्येतदप्येतेन गतार्थमिति । अत्रोच्यते, यद्यपि नास्ति तथा निर्वाह, तथापि श्रुतौ न तथा स्यात्, सर्वभूतानामिति षष्ठ्यन्वयवैयर्थ्यप्रसङ्गात् । स्त्रीप्रत्ययस्तु बाहुल्येन नेय । 'अस्येशाना जगतो विष्णुपत्नी' इति च मन्त्रान्तरेणोक्तम्, तदपि हि तद्विभूतिभूतभूमिविषयत्वात् तत्पर्यवसायिन । श्रीवैकुण्ठगद्ये च शेषादीनामपि तदाज्ञानुविधायित्वमुक्तम्—'शेषशेषाशनादिसर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या' इति । आहुश्च भगवद्यामुनाचार्या — 'यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुर्नालं मातुमियत्तया निरवधि नित्यानुकूलं स्वत' इति । वेदार्थसङ्ग्रहे चोक्तम्— 'स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकमहिममहिषी' इति । उक्तं च श्रीवत्साङ्कमिश्रै — 'देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते' इति । तदात्मजैश्च— 'प्रशमनबल—' इत्यारभ्य 'तव भगवतश्चैव साधारणा गुणराशय' इति । न चैतावता भगवतो निःसमाभ्यधिकत्वविरोध, प्रत्युत तत्प्रतिष्ठापनमेव, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुत । न ह्येवंविधपत्नीविशिष्टत्व कस्य-

**पद्मवनालयां**

चिन्नदन्यस्यास्ति, येन तत्साम्यादिशङ्का स्यात्। उपबृंहितं च—'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इति। एवमस्याः शीलादीनामनवधिकातिशयत्वेऽप्यविरोधः। यथा प्रभागुणोत्कर्षे भास्करं निःसमाधिकः। श्रीमानपि तथैव स्यात्पतिः पत्नीगुणोन्नतौ॥ ज्ञानभोगसमानत्वे नित्यमुक्ते श्वरेषु च। यथा नैगम्यनियतिस्तथैवात्रेत्यनाविलम्॥

शास्त्रेषु बहुधा भगवद्गुणत्वाविरुद्धेन निर्दिष्टायास्तस्याः केश्चिन्निर्गुणत्वादिकं शङ्क्यते इति तद्व्युदासाय कल्याणगुणोक्तिः। गुणत्वादिनिर्देशास्तु अस्या द्रव्यत्वाविरोधेन अन्यपरा इति तत्र तत्र द्रष्टव्यम्। 'ततोऽवलोकिता देव्याः' 'त्वयावलोकितः सद्यः' 'न श्लाघ्यः' इत्यादिभिरेतदवलोकनात्क्षुद्राणामपि गुणसिद्धौ सर्वकल्याणगुणशालित्वमस्या कैमुत्यसिद्धम्। कल्याणत्वं मोक्षपर्यवसायितत्त्वज्ञानादिमङ्गलावहत्वं स्वयं नित्यानुकूलत्वं च। 'न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः।' इत्याद्यभिप्रेतसर्वापरिच्छेद्यगुणानन्त्यातिशयसूचनाय गणशब्दः; ऐश्वर्यादेरनेकावान्तरगुणसमुदायात्मकत्वाद्वा, 'प्रभूतं विज्ञानम्' इत्यादिन्यायात्॥

अथ विभूतितोऽपि मङ्गलनिर्वाहकत्वं प्रदर्शयति— **पद्मवनालयामिति॥** एतेन 'पद्मे स्थितां पद्मवर्णाम्' 'गन्धद्वाराम्' इत्याद्युक्तसौवर्ण्यसौगन्ध्यातिशयोऽपि सूचितः। तच्छरणवरणमन्त्रे चोक्तम्—'तां पद्मनेमीं शरणमहं प्रपद्ये' इति। नाभिस्थानीयकर्णिकावस्थानात्, पद्ममस्या नेमिवद्वर्तते। पद्ममेव नेमिः नयनसाधनं यस्याः सा पद्मनेमीति केचित्। 'मातरं पद्ममालिनीम्' 'आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्' 'श्रीनिलयमाल्याधारिणी' 'प्रियाणि तस्याः पुष्पाणि कमलानि विदुर्बुधाः' 'विकासिकमलस्थिता' इत्यादिष्वप्यस्या विशेषतः पद्माङ्गीकारश्रुतेः, श्रीविष्णुस्मृत्यादिषु विस्तरेणोक्तानां मङ्गल्यविभूतिभेदानामिव विशेषतो देवतेति ज्ञापयितुमिदं सुप्रसिद्धमुख्यमङ्गलभूतपद्मवनोदाहरणम्। 'यत्र पद्मवनानि च'

भगवतीं श्रिय देवी

इति भगवतो विशेषसन्निधिस्थाने पद्मवने तद्विग्रह इवासौ विशेषेण सन्नि धत्ते । एतेन 'साहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते । भूत्यर्थं सर्वभूताना पद्मा श्री पद्ममालिनी' इति श्रीवासुदेवसवादोक्त सर्वभूतोज्जीवनार्थावतार सौलभ्यमपि प्रदर्शित भवति । एव मङ्गलगुणविभूतियोगेन निर्दोषत्वमपि सकलस्याह — भगवतीमिति ॥ 'ज्ञानशक्तिबल— ' इत्यारभ्य 'विना हेयैर्गुणादिभि ' इति हि स्मर्यते । अथ उक्तवक्ष्यमाणसर्वातिशयस्थापिकया सुप्रसिद्धस्वासाधारणसमाख्यया सर्वसमाश्रयणीयत्वादिकमाह— श्रियमिति ॥ एव हि श्रीशब्दो निरुच्यते— 'शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्य श्रयते च पर पदम् ॥ इति, 'श्रयन्तीं श्रीयमाणा च शृणन्तीं शृण्वतीमपि ।' इति च । अस्य च नाम्न सर्वप्र कारोत्कर्षज्ञापकत्वमाह — 'श्रीरित्येव च नाम ते भगवति ब्रूम कथ त्वा वयम्' इति, श्रीरसि यत इति च । भगवन्नारायणपदाक्तस्यानु रूप्य च 'भगवतीम्' 'श्रियम्' इति पदाभ्या दर्शितम् । श्रीपदनिरुक्तिभि रश्रितदोषनिराकरणम्, प्राप्यरुचिप्रापकाध्यवसायादिप्रदानम्, उपायस्वरू पनिर्वर्तकत्वम्, 'पितेव त्वत्प्रेयान्' इत्युक्त पतिप्रसादजनकत्व च सिद्धम् । एवमाश्रितार्थव्यापारात्तदनुगुणावतारादयश्च न कर्मकृता इत्याह— देवी मिति ॥ भर्तुर्लीलायामेव रस्यात्तदनुगुणव्यापारेष्वपत्तिरिति भाव । 'भगव तीम् इत्यादिपदत्रयेण द्विपदव्याख्यानस्थभगवद्वासुदेवपदार्थानुरूप्य च भाव्यते । श्रिय देवीमिति समभिव्याहारेण, 'श्रिय देवीमुपह्वये श्रीर्मा देवी जुषताम्' 'श्रीर्देवी पद्मसहस्रमादुत्थिता धृतपङ्कजा' इत्यादिश्रुतिस्मृतय सूच्य ते । 'श्रिय श्रीश्च भवेदग्र्या' इत्युक्त पतिसबन्धेन च तमामत्यादिकमपि दवीम त्यनेन गम्यते ॥

एवम् 'क्रीडार्थमवतीर्णस्य तस्य इत्याद्युक्तलोकानुकम्पाहेतुकावताराया अपि तस्या 'पश्यता सर्वदेवाना ययौ वक्ष स्थल हरे ' 'मया विना

## नित्यानपायिनीं निरवद्या

शुध्यति चावदानम्' इत्यादिभिरागन्तुकमलैश्चित्रैरादिव्यपदेशात्कथमप दायमीतानाः तत्तदवस्थासु तत्पुरुषकारत्वं भगवदाश्रयत्वं स्यादित्यत आह— नित्यानपायिनीमिति । 'श्रीवत्सवक्षा नित्यश्रीः' 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । अन्येषु चावतारेषु विष्णोरेषानपायिनी' 'भगवद्वासुदेवस्य नित्यैवैषानपायिनी' 'महाविभूते संपूर्णषाड्गुण्यवपुः प्रभो । मम महाविभवस्य नित्यैवैषानपायिनी ॥' इत्यादिभिरनयोर्न कदाचिदपि विश्लेषः । अवतारेष्वपि कदाचिद्विश्लेषोक्तिरभिनयमात्रमेव । इदं च श्रीमद्रामायणान्ते सूचितम्— 'रामस्य मध्यपार्श्वे तु पद्मा श्रीः समवस्थिता । दक्षिणे ह्रीविशालाक्षी यशसागस्तथाग्रतः' इति । एवं देवीमित्यनेन व्याख्येयत्वश्रीशब्दार्थो दर्शितः । तन्मुखेन नित्यं भगवत सुखप्रसादनीयत्वं व्यञ्जयितुं नित्यानपायिनीमित्यनेन तदनन्यमतुपर्थश्चोक्तो भवति ॥

ननु भगवन्नामित्यादिभिः स्वतो निर्दोषत्वादौ निश्चयसम्बन्धे च सिद्धेऽपि, स्त्रीत्वोपाधिवशात् कदाचित्पतिपारार्थ्यवैगुण्यम्, परिमितिकूलाभिप्रायत्वम्, अविमृश्यकारित्वम्, नृशंसत्वम्, निग्रहरुचित्वं च, 'शतह्रदानां लोलत्वं शस्त्राणां प्रतिकूलताम् । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥' विगते स्त्रीषु चापल्यं किं न कुर्वन्ति योषितः । इत्यादिभिः प्रसिद्धं यदि स्यात् तदा कथं नित्यसदाश्रयत्वादरणीयत्वं स्यादित्यत आह— **निरवद्यामिति** ॥ सामान्यतः स्त्रीत्वनिबन्धनदोषप्रसञ्जनं श्रेनगश्चेव कर्मोपाधिविशेषनियतं प्राणिषु चेति नास्यास्तत्प्रसङ्गः । उक्तं च तत्रैव— 'अनवद्यानवद्याङ्गी नित्यं तद्धर्मधर्मिणी' इति । श्रीमद्रामायणे च— 'इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता' इति । किं च, 'आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः' इति स्मारयन्त्या नृशंसत्वप्रसङ्ग एव नास्ति । निग्रहरुचित्वं समर्थाया एवास्या अत्यन्तापकारिण्यपि न सम्भव

देवदेवदिव्यमहिषीम् अखिलजगन्मातरम् (अस्मन्मातरम्)

तीति स्वयाक्यमिद्धम्, 'असन्देशात्तु रामस्य तपसश्चानुपालनात् । न त्वा कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥ इति । एतद्विभूतिभूतदेवतादिषु कमयशादीदशदोषसम्भवेऽपि नास्यास्तन्मूलभूत मक्त्य । 'त्वया दवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत् त्वयदानीं समेधितम् ॥ मत्यक्ता ये त्वयामले—' इत्यादिपूत्तमत्यागोऽप्युपभामात्रम्, तत्र प्रीतकोपविरहेणावस्थानम् ॥

नन्वेव भगवदभिमतत्वादिकं शरण्यत्वोपयिकं सर्वं तत्पत्न्यन्तरेऽपि स्यात्, विष्णुर्भो दिवो महण पृथिव्या इत्यादिभिस्तन्माहात्म्यप्रसिद्धे, तारतम्यं तु दुर्लभम् अत कथम् 'अशरण्यशरण्यामनन्यशरण' इत्युच्यते ? तत्राह— देवदेवदिव्यमहिषीमिति ॥ यथा मनुष्यादिभ्योऽधिकानां ब्रह्मादिदेवतानां मनुष्यस्थानीयानां सर्वप्रकारसमधिकतया भगवान् देव, तथा ब्रह्मादेदेवपत्नीभ्य समधिकानां भगवत्पत्नीनामप्यसौ प्रधानतमत्वभिप्रायणाह दिव्यशब्द । इयं शुभयाथिपत्नीत्वशेषित्वसाम्राज्येन मङ्गलप्रदायित्वादिभिश्च प्रकृष्यत इति भगवच्छास्त्रे उक्तम् । तथा नाम पुराणेऽपि— अनन्तनामधेया च शक्तिचक्रस्य नायिका । इति । पत्न्यादिषु शक्तिशब्दस्तद्विहारादिकार्योपयुक्तविशेषणत्वाभिप्राय । तदिदं प्राधान्यम्, 'कृताभिषेका महिषी इति विशेषणात् महिषीशब्देन वा विवक्षितम्, तदा दिव्यशब्द, तद्विग्रहस्य भगवद्विग्रहस्येवाप्राकृतत्वादिकं व्यनक्ति ॥

एव चिर्कार्पितभङ्गपरिहाराय प्रत्याख्यानानहत्वाय च पतिवात्सल्यातिशय उक्त । अथ तथाविधोत्कर्षतनिकर्षतापराधदर्शनजनितसाध्वसपरिहाराय प्रजावात्सल्यातिशयमाह— अखिलजगन्मातरमिति ॥ जगच्छब्द इह चेतनपर । नमामि सर्वलोकानां जननीमब्जसम्भवाम् त्वं माता सर्वलोकानाम् इत्यादिभिरस्याश्चतुर्मुखादीन्सर्वान् जनयन्त्याति मातृत्वात् लोकमातेति नाम पठ्यते । एवमुपबृंहणबलात् 'दिवस्त्वं मातरम्'

अशरण्यशरण्याम्

---

इत्यादिपूर्वमस्या मातृत्वं भगवतः पितृत्वेन समानविषयम्। न हि मदेकार्थमिदमस्या मातृत्वमित्यभिप्रायेण अखिलशब्दः। तदिदं विश्वमातृत्वं दर्शितं निरुपाधिकवात्सल्यं रिपूणामपि वत्सलस्य पत्युरनुरूपतमम्। तत्र हितचिन्तारहितेषु अहितचिन्तकेष्वपि दयाविष्टास्या कदाचित्प्रभृति, किं पुनरिदानीं हितचिन्तोन्मुखे मयीति भावः। दुःसहनिरन्तरापराधे दौरात्म्यनिधौ रावणेऽपि हि सोन्मादपुत्र इव जननीत्वेनैव जातवात्सल्या 'मित्रमौपयिकं कर्तुम्' 'विदितः स हि धर्मज्ञः' 'प्रसादयस्व त्वं चैनम्' इत्यादिभिः सर्वाधिकं रहस्यमुपदिश्य तद्भ्रमप्रशमने प्रयतते स्म। एवमखिलजगन्मातरमित्यन्ते पदे श्रियः सर्वचेतनजननीत्वममोघधर्मत्वं सूचितम्, यथोक्तं नारदीये— 'नारायणात्मिकां देवीं श्रियं त्रैलोक्यमातरम्। भजमानो महाभाग परमो धर्म उच्यते॥' इति। अयं च तदात्मकत्वस्य देवतत्पत्नीत्वाभिप्रायेण। अत्र 'अस्मत्स्वामिन्' इतिवत् 'अस्मन्मातरम्' इत्यपि श्रीविष्णुचित्तादयः पठन्ति, व्याचक्षते च 'सामान्येन निखिलजननेन पुनश्च विशेषेण 'अस्मन्मातरम्' इति' इति॥

उक्ते स्वभावे सिद्धमपेक्षितानुगुणमाकारमाह—अशरण्यशरण्यामिति। येषां महापराधनिपतितत्वमाना सर्वलोकशरण्योऽपि न भवेच्छरण्यः, तेषामप्यसौ शरण्या, यथोक्तं त्रिजटया— 'भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया। राघवाद्धि भयं घोरं राक्षसानामुपस्थितम्॥' 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा। अलमेषा परित्रातुं राक्षस्यो महतो भयात्॥' इति। वानरपरिषदि चैतदनुवदन्त्यां सुमनुराह— 'अलमेषा परित्रातुं राघवाद्राक्षसीगणम्।' 'ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता। अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः॥' इति। 'पापानां वा शुभानां वा' इत्यादीनि च प्रभञ्जनसुतं प्रति तद्वाक्यानि। कुपितनरसिंहसमीपागतिभीताश्च प्रजापतिप्रमुखास्तामेव विश्वमातरमाश्रित्य तत्पुरस्कारेण समुपसेदुरि

अनन्यशरणः शरणमहं प्रपद्ये ॥

ति पुराणप्रसिद्धम् । आहुश्च— 'मातर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधास्त्वया रक्षन्त्या—' इत्यादि ।

भवत्स्वमशरण्यशरण्यत्वं तस्याः, भवतस्तेन सिमायातमित्यत्र तदेकप्रपत्तियोग्यां स्वावस्थां दर्शयति— अनन्यशरण्य इति । अन्यत् शरणं यस्य नास्ति सोऽनन्यशरणः । शरणमुपायः 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते साम्प्रतं त्वेष उपायार्थैकवाचकः ॥' इति स्थापनात्[1] । एवमुत्तरत्रापि द्रष्टव्यम् । उत्तमपुरुषणैव स्वान्वये सिद्धे 'अहम्' इत्यधिकोक्त्या स्वस्य दुष्करोपायान्तरशक्तिः सूच्यते । प्रपद्य इत्यत्र यद्यपि गत्यर्थेन धातुना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथापि प्रमाणानुसारात् शरणशब्दतात्पर्याच्च प्रार्थनाचित्तिमभरन्यासं करोमीत्युक्तं भवति । प्राप्यतं चानन्तरं पर्यरिक्षेप । वस्तु परत्परीपक्षेण दक्षिणादानेन प्रशासनं वा भरन्यासः, नासौ प्रपत्तिः । नीन्दमुमुक्षोरेव भगवद्वाक्यच्छेदन तदन्यप्रपदने तदेकान्त्यं निहन्यात्? मैवम्, यथा कर्मयोगादिकमनन्योपासनार्थतयोपादीयत, तथानन्यप्रपदनार्थतयोपादीयमानमिदं तदेकान्त्यमत्र स्थापयति । यथा स्वाधिकारोचितपरिकरापेक्षेऽनन्यत्वाविरोधः, तथेहापि । 'आप्तो विष्णुरसमश्च तथा परिकररम्यः । नित्यो यज्ञो न चानित्यः कर्मवश्या मुमुक्षुभिः ॥' इति चोक्तम् । एवं पदस्ततया वरणेऽपि न विरोधः, अन्यथा गुरुभजनतत्पुरस्सरादिकमपि विरुध्यत । अथ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' 'आचार्यमुपासीत' इत्यादिभिस्तादर्थ्यात् तत् सगृहाते? इदमपि पूर्वोक्तैरेव, अविशेषात् । किं च, श्रियं प्रपत्तिम् 'चन्द्रां प्रभासाम्' इति मन्त्रेण अलक्ष्मीनाशनार्थमामनन्ति, तथा 'ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्' इति । या मुमुक्षूणां मोक्षहेतुविद्यैव लक्ष्मी, तदभा-

[1] ध्यवस्थापनात्

**पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्ति-**

---

यत्नाशोऽनया क्रियत इति तदर्थं शरण्याभिप्रायसंवादिनी तन्महिषीप्रपत्ति र्मुख्यैवेति सिद्धम् । एवं सेयं साक्षात् परम्परया वा सर्वफलसाधिका । 'उदाराम्' इति श्रौतं पदं त्वनवच्छिन्नविषयम् । तच्च 'सर्वकामप्रदां रम्यां संसारार्णवतारिणीम् । क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेत् ॥' इत्यादिस्वायम्भुवादिवचनैरुपबृंहितम् । गीतास्वपि 'ऐश्वर्यमक्षरगतिं परमं पदं वा' इत्यारभ्य 'कथय कोऽयमुदारभावः ।' इति । व्यतिरेकमुखेन चैतत्स्थिरीकृतं चतुःश्लोक्याम्— 'श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्' इति ॥

तत्किमनयापाश्रितमित्यत्राह— **पारमार्थिकेति** । पारमार्थिकशब्दस्य चरणारविन्दविशेषणत्वे अर्थशब्दः प्रयोजनवाची । पारमार्थिकं परमार्थं इत्यर्थः । यद्वा, परमप्रयोजनभूतानुभवग्राह्यं परमभोग्यमित्यर्थः । एतेन परभक्त्यादिजननार्हत्वं व्यज्यते । निर्दोषगुणरत्नस्वामिचरणयोः सेवकस्य भक्त्यतिशयव्याप्त्यभिप्रायेण भगवच्चरणशब्दः अरविन्दस्वरूपेण च । स भ्रातुश्चरणौ गाढम् 'यावन्न चरणौ भ्रातुः' 'तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातमृदुरक्ताभिरङ्गुलीभिरलङ्कृतौ ॥ प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिनन्दितौ' इत्यादिष्विवान्योन्ययोगादपि शोभमानत्वद्योतनाय युगलशब्दः । पारमार्थिकशब्दस्य परभक्त्यादिविशेषणत्वे अनुभवविशेषणत्वेऽपि परमप्रयोजनत्वं भ्रमकैतवराहित्यं वा विवक्षितम् । ऐकान्तिकत्वं प्रयोजनान्तरानन्वयेन सदैकनियतत्वम् , तत एव नित्यानुवृत्तत्वमात्यन्तिकत्वम् । अन्यार्थत्वे हि नात्मदौ निवर्तेत । निरतिशयत्वमात्यन्तिकत्वमिति चाहुः । अत्र परभक्तिः उत्तरोत्तरसाक्षात्कारेच्छात्मिका धीः , सा च 'या प्रीतिः' इत्यादिष्विव विषयस्वभावजा, न त्विष्टसाधनत्वबुद्धिजा । परज्ञानम् उत्तरोत्तरसाक्षात्कारः । साक्षात्कृते निरन्तरानुबुभूषा परमभक्तिः । अनुभवस्त्विहानुकूलतमत्वेन साक्षात्कार एव । नित्याना

परज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनान-मुक्तानां च नित्यानुवृत्तैकरूपानुभव   गुणभेदेन परभक्त्याद्याकारभेदैश्च विकल्प्यते। पूर्वपूर्वक्षणवृत्तादुत्तरक्षणावच्छिन्नस्वरूपस्येष्टतमताभिप्रेत्य कृत-स्वव्यपदेशः   तस्य मुख्यत्व तु योगविशेषजन्यानुभवं ॥

नन्विरोपायभूतपरभक्त्यादिभिमुक्तदशानुभवस्य कर्तव्य मुख्यमेवास्तु, तथासत्युपरि श्लोकत्रयोदितज्ञानस्य ध्यानत्रयोदितपरमभक्तेश्च प्रार्थनमुपपद्येत। तदर्थं च यथाभाष्य समस्तवाक्यमत्रापत्तिरिह प्रार्थिता स्यात्? नैवम्, 'प्रकृति स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव च प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञान   इत्यादिवक्ष्यमाणस्वरूपतया तदनुगुणमिह व्याख्यातुमुचितत्वात्। न च भगवत्प्रपत्ते स्वतन्त्रतया मोक्षसाधनत्व नास्तीति वाच्यम्, श्रुतिस्मृतिभगवच्छास्त्रेषु तत्स्वातन्त्र्यदृष्टेः। यो ब्रह्माणम् इत्यादिके हि श्वेताश्वतरमन्त्रे हिरण्यगर्भादिकारणभूतपरमपुरुषशरणागतिर्मुमुक्षुणानुष्ठेयेति प्रतीयते। न च अनिदङ्कृत्यदर्शनात् गुरुलघुविकल्पानुपपत्तेश्चात्र व्यवहितसाधनत्व कल्प्यम्   अधिकारिभेदेन व्यवस्थापनात्। तथा चोपबृंहितं ब्राह्मे पुराणे— शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥ इति। अहिर्बुध्न्येन च सुस्पष्टमुक्तम्— 'यदेन कामकामेन न साध्यं साधनान्तरैः। मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः॥ प्राप्यते परमं धाम यतो नावर्तते यतिः। तेन तेनाप्यते तत्त्वं न्यासेनैव महामुने॥ परमात्मा च तेनैव प्राप्यते पुरुषोत्तमः। इति। प्रपत्तिप्रयोगश्चाविलम्बितफलप्रद[1] एवमुदाहृत— 'अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः॥ शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्। तस्यानुबन्धात्पाप्मानः सर्वे नश्यन्ति तत्क्षणात्॥ इति। अत्रापि त्वमेवोपायभूतो मे भव इत्यादिभिस्स्वातन्त्र्यमस्य सूच्यते। 'तपां तु तपसां न्यासमतिरिक्तं तप

1 फलप्राप्तिपर्यन्त एवोदाहृत

वधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारित

शुतम्' इति चाह । न्यासशब्दस्य चात्र शरणागतिपरत्वं दर्शितम्— 'निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥' इति । 'न्यास इत्याहुर्मनीषिणो ब्रह्माणम्' इत्यत्र न्यासशब्दसामानाधिकरण्यं त्वन्यपरम् । एवं स्वतन्त्रप्रपत्तिसिद्धौ 'भक्त्या परमया वापि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ॥' इति विकल्पोऽपि व्यवस्थितविषय उपपद्यते । श्लोकत्रयोदितज्ञानादिकमप्यत्र स्वयंप्रयोजनतया प्रार्थ्यते इति न विरोधः । न च प्रपत्तिस्वातन्त्र्ये भाष्यविरोधः, तथा हि— 'चतुर्विधा भजन्ते माम्' इत्यादिना उपासनस्येव प्रपदनस्यापि 'तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् । यावन्न याति शरणं त्वामशेषाघनाशनम् ॥ प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते । सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा ॥' इत्यादिभिः सर्वाभिमतसाधनत्वावगतेः, सर्वफलसाधारणमपि तत्र चरमश्लोकविषयं प्रकृतोपायविरोधिपापनिवर्तनरूपोदाहरणविशेषं प्रदर्शयामास । इदं तु सर्वान्तरसाधनान्तररहितमनन्यविनयनप्रवृत्तत्वात् प्राप्तिविरोधिनिरसनार्थतयोदाहरति । तस्मान्नोपायभक्त्यादिकमिहोच्यत इति सिद्धम् । परभक्त्यादिभिः साध्यमनुभवादिकं तदभावेऽपि मे प्रपत्तिमात्रेण भवत्विति विवक्षायां प्रस्तुतविरोधाभावेऽपि, वक्ष्यमाणानुसारेण शिवभावान्तरं दर्शितम् । आर्तोपच्छन्दनं गद्यभाष्यं तु परस्तनम् । इत्यादिभिर्धियोऽन्येन प्रसीदन्तु प्रमाणतः ॥

पुनश्च मुक्तानुभवं 'परिपूर्ण-' इत्यादिभिः षड्भिर्विशिनष्टि । अत्र हि मुमुक्षूणां भगवदभिमतविशेषेषु यथासम्भवं मुक्ततारतम्येन परिमिताकारगोचरत्वम्, खद्योतस्फुरणवत्सान्तरत्वम्, कंचित्कालं निरन्तरत्वेऽपि सारस्वतस्रोतोन्यायेन विच्छिन्नप्रवाहत्वम्, सामान्यतः सर्वविषयत्वेऽपि परोक्षरूपत्वम्, स्वयंप्रियत्वेऽपि मधुरभोगजनकेन मुक्तिरूपस्वप्रयोजनसाधनत्व

शेषावस्थोचिताशेष-

बुद्धया उपादेयत्वम् , अत एव सावधिकरसत्वं च स्यात् , निःशेषनिवृत्त-
*प्रतिबन्धस्य तु न तथेति भावः । अत्र प्रीतिहेतुत्वाभिधानेऽपि तदर्थबुद्धया
उपादेयत्वाभावादनन्यप्रयोजनत्वमविरुद्धम् । तत्र हेतुरनवधिकातिशयप्रिय
त्वम् । 'भगवदनुभव' इत्यनेन मुक्तौ पाषाणकल्पत्वपक्षः, स्वात्ममात्रानुभ
वनिर्गुणप्राप्त्यादिवादश्च व्युदस्यते, सर्वविशिष्टब्रह्मानुभवे प्रधानानुभाव्य
च व्यञ्जितम् ॥*

अत्रानुभवजनितप्रीतिर्नाम 'निरतिशयानुकूलोऽयं विषयो मयानु
भूयते' इति स्वयमपि निरतिशयानुकूल्यवती कृतार्थताबुद्धिः, 'कृतार्थोऽ
स्मीत्यमन्यत' इतिवत् , सा च सामग्र्यनुवृत्त्या प्रतिक्षणभाविनी प्रवाहवि
च्छेदरहिता चेत्येके । अन्ये तु – प्रीतेः स्वरूपतोऽनुवृत्तत्वेऽपि पूर्ववदनुभव-
स्यैव प्रयोज्यप्रयोजकाकारविभागेन जन्यजनकत्वाद्योयुक्तिः – इति । अस्याश्च
श्च प्रीतेरनवधिकातिशयत्वं प्रीत्यन्तरापेक्षया निकृष्टत्वविरहात् , ईश्वरस्य
नित्यानामपि हि न मुक्तेभ्योऽतिशयिता प्रीतिः, 'श्रोत्रियस्य चाकामहतस्य
'भोगमात्रसाम्यलिङ्गाच्च' इति समानभोगव्यवस्थापनात् , ईश्वरनित्यमुक्त
भोगानामुपचयापचयतारतम्यवादयोरपन्यायमूलत्वाच्च । कैङ्कर्यस्य भगवदि
च्छाधारितत्वेऽपि, 'प्रहर्षयिष्यामि' इति तत्प्रीत्युद्देशेन प्रवृत्तत्वेऽपि, 'प्रीति
कारित—' इत्यादिना 'यथाहं केनापि वृत्तिम्' इति न्यायात् प्रीतेः प्रेर
कत्वातिशयेन स्वरसप्रवृत्तिः नियोगनैरपेक्ष्यं च द्योत्यते । एवं प्रीत्या प्रवृ
त्तस्यापि कैङ्कर्यविशेषेषु स्वाभ्यभिमतिविशेषास्त्वनुसंधानीयाः । तादृशमेव
च कैङ्कर्यम् 'एतत्साम गायन्नास्ते' 'जक्षत्क्रीडन् रममाणः' 'स यदि
पितृलोककामो भवति' इत्यादिष्वप्युक्तम् । अशेषावस्थाशब्देन परव्यूहा
दयः स्थानासनशयनादयो जगत्सृष्ट्यादयश्च भगवतोऽवस्थाः, दास्य न
मशरीरत्वाशरीरत्वानेकशरीरत्वरूपा गृह्यन्ते । कैङ्कर्यस्य तत्तदवस्थोचित
त्वम्, यथालोकं यथागमं च चामरग्रहणादिना भोक्तृतया भोग्यतया च

शेषत्वैकरतिरूपनित्यकैङ्कर्यप्राप्त्यपेक्षया

मभिधाय कृतत्वात् । अशेषशेषता आत्मन , आत्मीयस्य च परशेषभाव यद्वा, सर्वप्रकारशेषवृत्ति । अनन्तगरुडादिप्रतिनियताधिकारकृत्येषु मुक्त स्यैच्छाविरहात्, क्रियमाणेष्वपि सर्वेषु 'एकधा भवति' 'तावन्ति च रूपाणि भगवान् देवकीसुत' । इति प्रकारेण शेषशेषिणोर्यथाभिमतरूप परिग्रहेण मुक्तस्य स्वाभिमतसर्वशेषवृत्ति स्याद्वेन, तस्याम् एकशब्देन स्वप्रयोजनप्राधान्यव्युदास । अथ वा, नित्यानां मुक्तानां च भगवत्प्रीतिप- रासु सर्वासु शेषवृत्तिषु परकृतासु स्वकृतासु च प्रीत्यविशेषो विवक्षित , 'नित्याभिवाञ्छितपरस्परनीचभावै' 'यामिस्स्व स्वनवाहुदृग्भिरिव' इत्यादिन्यायाच्च । एकरूपा वा रति एकरति , कालभेदेन सङ्कोचाद्य भावात् । रतिरिह प्रीतिरिच्छा वा, तथा हेतुभूतया कैङ्कर्यं निरूप्यत इत्य- भिप्रायेण रूपशब्द । 'शेषत्वैकरति— इत्येतत् श्रीवैकुण्ठगद्ये 'परिच र्यैकमनोरथ इत्यनेन विवृतम् । अत्रानुभवरतिकैङ्कर्यशब्देषु ज्ञानचिकीर्षा प्रयत्नक्रमश्च प्रकाशित । यद्वा, शेषत्वैकरतिरेव कैङ्कर्यप्रधानं स्वरूपम्, तत्स रिवाहतया तु व्यापारान्तराणि भवन्तीत्यभिप्राय । प्राकृतप्रलयादिष्व प्यविच्छिन्नप्रवाहतया अस्यकैङ्कर्याद्यावृत्त्यर्थं नित्यत्वोक्ति , 'प्रलये न व्यथन्ति च' इति हि श्रुतम् । स्वामिसमादेशापेक्षी तच्चोदितकारी किङ्कर , तस्य वृत्ति कैङ्कर्यम्, तस्यान्यैर्दुष्प्रापत्वेनालभ्यलाभत्वसूचनार्थ म्, इत पूर्वं प्राप्तेरभावात् अप्राप्तप्राप्तिपक्षव्युदासेनापेक्षार्हत्वज्ञापनार्थं चाधिक प्राप्तिशब्द । 'स्वरूपाविर्भाव' इत्यादिकं हि नित्यसिद्धेष्वेवाका रेषु मुख्यम्, न तु साध्ये निरङ्कुशविकासे तत्पूर्वकव्यापारे च । तत्र तु निवृत्तप्रतिबन्धोपाधिकत्वसूचनार्थम् 'आविः स्युर्मम सहजकैङ्कर्यविधय' इत्यभियुक्तैरुक्तम् । आत्माभिमानानुगुणपुरुषार्थव्यवस्थया । भगवत्पारत- न्त्र्यादि प्रबुद्धस्य सुखायते ॥ परेच्छायत्तभूम्नोऽपि स्वेच्छाया अविघातत । सर्वं परवशं दु स्वमित्यादि नात्र बाधकम् ॥ स्वत शेषत्वकैङ्कर्ये न कुत्रापि

पारमार्थिकी भगवच्चरणारविन्दशरणागतिर्यथावस्थिता

सुखावहे । कर्मजत्वान्तथात्वस्य लोके च व्यभिचारतः ॥ महानन्दमहिम्ना च प्रादुःखानेक्षणादपि । मोहदुःखे तदा स्यातामिति मूढस्य जल्पितम् ॥ सुखस्य मोहनत्वं च तामसत्वाद्युपाधिभिः । सुखाय च भवेत्क्वापि पूर्वदुःखावमर्दनम् ॥

एवमिह 'अपेक्षया' इत्यन्तं व्याख्येयं सोपबृंहणचतुर्थ्यभिप्रेतस्य प्रपञ्चनम् । भगवत एव शरणत्वे वक्तव्येऽपि, दिव्यविग्रहस्य शरण्यगुणाभिव्यञ्जकत्वम्, चरणग्रहणस्य कृपोत्तम्भकत्वातिशयेनानतिक्रमणहेतुत्वं चाभिप्रेत्य चरणशब्दः । अरविन्दशब्द उपायदशायामपि भोग्यत्वं सूचयति । अत्र भगवच्छब्दो निरपेक्षरक्षणौपयिकाकारपौष्कल्यप्रदर्शकः । कृत्स्नविदपि भाष्यकारः प्रश्नप्रकाशनाय 'पारमार्थिकी' 'यथावस्थिता' इति सामान्यतो निर्दिशति, 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ।' 'यद्धितं मम देवेश तदाज्ञापय माधव' इतिवत् । एतेन भगवत्प्रपत्तेर्मोक्षसाधनत्वमित्येतावन्मया निर्णीतम्, सा यत्स्वरूपा, यत्प्रकारेति च न जाने, अतस्त्वमेव वत्सलतया मोक्षार्थभगवत्प्रपत्तेः स्वरूपादिकं यथाप्रमाणं ज्ञापयित्वा अनुष्ठापनीयोऽहमिति विशेषनिष्कर्षरहितानामपि विज्ञापनप्रकारः शिक्षितो भवति । एवं सामान्यत उक्तेऽपि सर्वज्ञा सर्वहितैषिणी देवी स्वयमेव सर्वं विधास्यतीति तात्पर्यम् । 'देवानां गुह्यम्' इत्याद्युक्तगोपनीयतमत्वम्, तत एव तत्र तत्र तदनुगुणनिर्देशैः प्रपत्तिस्वरूपादेर्दुरवगाहत्वं च सामान्यनिर्देशेन द्योत्यते । ननु सर्वलोकसर्वागमप्रसिद्धायाः प्रपत्तेः कथं दुरवगाहत्वम्? इत्थम्—केचित् भक्तिप्रपत्त्योर्व्यतिकरितप्रयोगादैक्यमिच्छन्ति । लक्षणभेदात् भेदमिच्छन्तोऽपि केचित्स्वातन्त्र्येण मुक्तिसाधनत्वं नानुमन्यन्ते । अन्ये तु स्वातन्त्र्याभ्युपगमेऽपि 'षडङ्गा शरणागतिः' इति वचनानुरोधात् आग्नेयादिषट्कवत् समुदायस्य साधकत्वमाहुः । तत्र षण्णां प्रत्येकं साधनत्वमपरे । तथैव यथेष्ट

केचित्कतिपयोपेक्षया सकलपरिग्राहित्वम् । नियतेऽनभ्यदेऽपि स्वरूपन्यासमात्रत्वम्, प्रार्थनाभरन्यासयोरन्यतरमात्रत्वम्, तयोरेव यथेष्टमङ्गाङ्गित्वम्, विकल्पो वा, केचिदाहुः । इतरे च प्रपत्तेरविधेयज्ञानरूपत्वम्, अनिवारणादिरूपत्वम्, दक्षिणाशाद्विहेतुकभरन्यासाविशिष्टत्वम्, अनङ्गत्वम्, द्विरावृत्त्यम्, सर्वधर्मस्वरूपत्यागापेक्षकत्वम्, भक्तियोगवत् आप्रयाणादनुवर्तनीयत्वम्, आरब्धव्यायपुण्यपापनिवर्तनाक्षमत्वम्, किं बहुना — वदागमनाञ्जलिप्रणामादिमात्रता च, प्रतिपादयन्ति । एवं विप्रतिपत्तियोग्यतया दुष्करप्रपत्तेर्निरासे, स तर्हि कथं स्यात्? उच्यते, तत्र तावत् भक्त्यैक्यादिपक्षाणि श्रीपरास्त्रादिषु निराकार्याणि । पाञ्चरात्रोक्तिरपि 'न्यास पञ्चाङ्गसंयुत' इति वचनबलात् अष्टाङ्गयोगोक्तिवत् अङ्गाङ्गिसमुच्चयेन स्थापिता । अत एव 'षडङ्ग तमुपाय च' इत्यादिकमपि समाधत्ते । स्वरूपन्यासस्यात्रापेक्षितत्वेऽपि 'आत्मात्मीयभरन्यास' 'त्वयि निहितभरोऽस्य सोऽहं यत' 'तत्र भरोऽहमनाविति धार्मिके' इत्यादिप्रमाणसम्प्रदायैर्भरन्यासप्राधान्यं सिद्धम् । यदप्युक्तं भरतमुनिना — 'अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः ॥' इति, यदपि चाहिर्बुध्न्येन — 'प्रार्थनामतिः शरणागतिः' इति, तथापि पूर्वोक्तप्रमाणानुसारात्, अनन्यसाध्यत्वतदेकोपायत्वोक्तितात्पर्याच्च प्रार्थनापूर्वकभरन्यासात्मकत्वसिद्धिरित्येषा दिक् । अतो दुरवगाहत्वशोधनाय 'पारमार्थिक' इत्यादिसामान्यनिर्देश उपपन्न इति ॥

एवमीदृशभरन्यासात्मकतया शरण्यस्योपयुक्ताकारविशिष्टतत्त्वनिर्णयतया च निरूप्यमाणायाः प्रपत्तेः स्वरूपतो विषयतश्च तत्फलतश्च परीत्यपिरह पारमार्थिकत्वम् । प्रकारतोऽङ्गतश्च तत्र कार्यप्रकारान्यथाभावराहित्यं यथाप्रमाणं फलसङ्गकर्तृत्वादित्यागश्चात्र यथावस्थितत्वम् । राजसतामसबुद्धिप्रकारश्च 'यया धर्ममधर्मं च' 'अधर्मं धर्ममिति या' इति श्लोकाभ्यां गीतः । एतेन अनाप्तागमसिद्धत्वम्, नित्यागमसिद्धत्वेऽपि पुरुषबुद्ध्या अन्यथाकल्पितत्वं च निरस्तं भवति ॥

अविरतास्तु मे ॥ अस्तु ते, तयैव सर्वं सपत्स्यते ॥

---

एव तु व्याख्यात व्यासार्यै – 'पारमार्थिकीति, तम कार्यन्युदास । आनुकूल्यादिशरीरवती च सा । तद्धि तस्या उपायान्तरेभ्यो व्यावृत्त स्वरूपम् । यथावस्थितेति, रज कार्यव्युदास । प्रपत्तव्यविषयसम्बन्धरूप प्रकार, तत्ताद्दिशमभिप्रेतम् । शरणवरणानर्हे शरण्यत्वधीर्ह्ययथावस्थिता स्यात् ' इति । अविरता आ मोक्षदानादविश्रान्तव्यापारेत्यर्थ । व्यापारश्च शरण्यप्रसादविशेष एव । 'सकृदेव हि शास्त्रार्थ ' 'सकृदेव प्रपन्नाय' 'ननु प्रपन्न सकृदेव नाथ इत्यादिबलादङ्गल स्वरूपतो वा अनुवृत्तिरिह न विवक्षिता । व्याख्येये 'प्रपद्ये' इति वर्तमाननिर्देशस्त्वनुष्ठानकालाभिप्राय । व्यापारानुवृत्तिकथनात्तु मार्योदाहृतभक्त्यङ्गप्रपत्तिव्यवच्छेद , सा हि मध्ये साधनरूप साध्यान्तरमुत्पाद्य विरतव्यापारा भवति, तदेव तु मुक्ति साधयति । 'अस्तु इत्याभाषणेन भगवत्प्रपत्ते स्वरूपतोऽपि स्वादुतमत्व सूच्यते । मे अकिञ्चनतमस्यानन्यशरणस्य ॥

एव विज्ञापिताया विष्णुपत्न्या प्रतिवचन निरूपति— अस्तु ते इति ॥ रावणेऽपि 'तेन मैत्री भवतु ते इति वादिन्या शरणागतविषये कैमुत्यसिद्धमिद वरप्रदानवाक्यमित्युत्प्रेक्ष्य प्रोक्तम् । ते मयि न्यस्तभरस्य मया स्वीकृतभरस्य च । उपायदानमेतस्यास्तदिद पतिसम्मतम् । यथा तस्या प्रसीदन्त्या हारदान हनूमते । भगवत्प्रपत्ते पूर्वोक्तनित्यकैङ्कर्यप्राप्तिपर्यन्तफलाविनाभावमाह—तयैव सर्वं सपत्स्यते इति ॥ एवकारेण अत्रोपायान्तरव्यवधाननैरपेक्ष्य द्योत्यते । यद्वा, 'अस्तु ते इत्येतावतैव पर्याप्ते 'तयैव इत्यादिक विभीषणसहागतराक्षसन्यायेन यथाभिमतानुबन्धिरक्षणाभिप्रायम् । अथवा, श्लोकत्रयोदितज्ञानित्वादिकम् अत्र पात्र च यत्प्रार्थ्यते, तत्सर्वमिह सर्व शब्दार्थ , उक्तेन सह वक्ष्यमाणमनुक्त चानुबन्धिरक्षणमभिमतत्वाविशेषात्सकल्य प्राच्यत । सपत्स्यते ' इति

अखिलहेयप्रत्यनीककल्याणैकतान-

भविष्यन्निर्देशः, प्रपत्त्यनन्तरक्षणप्रभृतितत्तदुचितकालाभिप्रायः। यदाह त्वद्यष्टारः यदिति वाक्यद्वयम् प्रियाग्दासमील्ति हि यदाग्य ॥

एवं श्रीमच्छब्दान्तिमगतमधमुपयोगविशिष्यपर्यन्तमुदाहृत्य, प्राप्यत्वप्रापकत्वोपयुक्तसर्वाकारमग्राहकं नारायणशब्दं व्याचिख्यासुः तत्र तत्पुरुषव्युत्पत्तौ अयनशब्दार्थम्, बहुव्रीहौ अन्यपदार्थं च दिव्यात्मस्वरूपं तावदाह— अखिलेति ॥ अत्र सम्बुद्ध्यन्तप्रयोगात् व्याख्येयऽपि तथात्वेन तच्छब्दाध्याहार इति कश्चित्। 'श्रीमन्नारायण स्वामिन्' इत्यादौ मन्त्रान्तरे च तत् द्रष्टव्यम्। अन्ये तु, प्रार्थमानगुणतात्पर्यानुसारेण सम्बुद्धिरिह प्रयुज्यत इत्याहुः। अखिलहेयप्रत्यनीकत्वम् अखिलहेयात्यन्ताभाववत्त्वम्, तेन कतिपयहेयरहितेभ्यो व्यवच्छेदः। कल्याणैकतानत्वं कल्याणानां सर्वेषां साधारणाश्रयभूतविस्तारत्वम्। नित्यादीनामपि न सर्वमङ्गलगुणवत्त्वम्। 'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्', 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः', 'स च सर्वगुणोपेतः' इत्यादिप्रमाणमर्यादाप्यधिकरणार्थं उपयोगादिप्रायमिहोक्तं। 'नराञ्जातानि तत्त्वानि' इत्याद्युक्तकारणत्वादिशङ्कितमविकृतं निकृतं च विकारापुरुषार्थादिकं प्रणेतोपेभ्यादिपर्यन्तमवदन्न किञ्चिदप्यस्यास्ति, न च कल्याणगुणजातं अविद्यमानं कश्चिदित्यर्थः। पश्चात्तु ज्ञानबलादिगुणोक्तिरेव विवरणम्। स्वरूपनिरूपकं ज्ञानत्वादिकमप्यत्र कल्याणगुणशब्देन सामान्यतः सगृहीतम्। एवं सगुणनिर्गुणश्रुत्योर्विषयभेदेन अविरोधात् कुदृष्टिपक्षश्च निरस्तः। यद्वा, कल्याणैकतान प्रदेशभेदेन कालभेदेनाप्यकल्याणलेशरहितमित्यर्थः। 'ज्ञानानन्दैकस्वरूप' इति तु तद्विशदीकरणम्। ज्ञानतया आनन्दतया च कार्त्स्न्येन कल्याणत्वमुक्तं भवति। जडात् भाग्यात् प्रतिकूलादासीनरूपज्ञानाभ्यां च व्यवच्छेदाय ज्ञानानन्दयोरुभयोरायुक्तिः। आनन्दकल्याणशब्दौ स्वपरापेक्षया आनुकूल्यं मन। एवम् 'ज्ञानादय

स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप

प्रधानस्य' 'अक्षरधियां त्ववरोध' इत्यधिकरणद्वयोक्त स्वरूपनिरूपकत्व-गद्वय व्यञ्जित भवति । अथ वा, हेयप्रत्यनीकत्वम् आश्रितानां यथायोग्य स्वेच्छया हेयनिवर्तकत्वम्, तथा सति लोके स्वसंकल्पायत्तहेयसद्भावस्य न विरोध । न च विरुद्धघटनशक्तिकल्पना, स्वरूपमात्रेण हेयनिवर्तकत्व-स्यानङ्गीकारात्, अन्यथातिप्रसङ्गात् । कल्याणैकतानत्वम् आश्रितानां-मभिमतेषु कल्याणेष्वैकाग्र्यम्, अनिष्टनिवर्तनमिष्टप्रापण चेत्यर्थ । इत्थं निर्दोषमङ्गलगुणाकरत्वमन्यत्रासिद्धम्, परस्मिन् उपपन्न इत्यधिकरणार्थश्च दर्शित ॥

त्रिविधानां चेतनानामचेतनानां च पराधीनत्वादिसाम्यादन्यभूत वस्त्वन्तर नास्तीत्यभिप्रायेणाह— स्वेतरसमस्तवस्तुविलक्षणेति ॥ एतेन ज्ञानभोगसाम्येऽपि सर्वप्रकारसाम्यनिषेध सिद्ध । 'नित्य विभु सर्वगत सुसूक्ष्मम्' 'विश्वमेवेद पुरुष' इत्यादिप्रसिद्ध त्रिविधपरिच्छेदराहित्य प्राधान्यत प्रथमाह— अनन्तेति ॥ सर्वव्यापित्वात् देशपरिच्छेदराहित्यम्, सर्वकालवर्तित्वात् कालपरिच्छेदाभाव, साक्षात्परम्परया वा सर्वप्रकारित्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वाद्वा वस्तुपरिच्छेदविरह । येन केनापि प्रामाण्येन स्वस्मादुत्कृष्टै कैश्चिद्वस्तुभिरधरीकृतत्वाभावाद्वा । तद्विमहादीनां नु सन्तोऽपि केचिदतिशयाल्लोकभूतिगता एवेति नैरपि तस्यैवोत्कर्ष । चित्त्वादिभि प्रमथकुल्यादिभिश्च परिच्छेदो देशपरिच्छेदान्तर्गत एवेति तन्निषेधेन सोऽपि निषिद्ध । वस्त्वन्तरशून्यत्वाद्वा सर्ववस्तुस्वरूपैक्याद्वा वस्तु-परिच्छेदाभाव इति पक्षौ तु सर्वप्रमाणविरुद्धौ, अनन्तपदपर्यायश्रुतिविरुद्धौ च ॥

यद्यपि दिव्यात्मस्वरूपापेक्षया सर्वेषामानन्त्य समानम्, यद्यपि च दिव्यविग्रहस्य गुणविशेष्यतया गुणान्तरत्वं-स्य तथापि स्वरूपस्वरूपाश्रयभूतत्वनिरूपितत्वपदावधारत्वेन तदनुरूपत्वात्, तादृशस्वरूपत्वसक्तत्वात्,

स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्या-

मालम्बनयोग्यविषयत्वेन मुमुक्षुणा शुभाश्रयत्वाच्च प्राधान्यं दर्शयितुं गुणेभ्योऽपि पूर्वं विग्रहमाह— स्वाभिमतानुरूपेति ॥ निरवधिकानन्दरूपस्य स्वस्यात्यभिमतमनुरूपं च दिव्यरूपम्। स्वरूपस्य नित्यनिरवधिकानुकूलत्वमस्याभिमतिं न बाधते, सर्वस्य सर्वदा विशिष्टैकानुभवगोचरत्वेन प्रमाणसिद्धत्वात्। सा चाभिरूपस्य आभरणाभिमतिवत् न स्वरूपानुकूल्यबाधिका, एवं भूषणादावप्यभिमतत्वाविरोधः। अनितरसाधारणशरीरादिव्यावर्तकैरप्राकृतत्वध्येयत्वप्राप्यत्वादिभिरपि विग्रहादेरानुरूप्यम्। सर्वदा उक्तप्रकारविशिष्टत्वमेकरूपत्वम्। नानारूपेष्वपि व्यूहविभवान्तर्याम्यवतारेष्वप्राकृतशुभाश्रयत्वादिकम् 'समस्ता शक्तयश्चैता', 'समस्तशक्तिरूपाणि' 'विभ्राकृत्यात्मना भिन्ने समागत्यावतिष्ठते' अर्चापि लौकिकी या सा भगवच्चित्तात्मनाम्। मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहा' इत्यादिभिरुच्यते। परव्यूहादिविग्रहवत् तत्तद्विग्रहानुप्रवेशात् अर्चायां षाड्गुण्यप्रकाशकशुद्धसत्त्वब्रह्ममयीत्यर्थः। देवतिर्यङ्मनुष्यादिविविधावतारदशायामपि 'आदित्यवर्णं तमसः परस्तात्' इत्यादिप्रसिद्धस्य परमपदनित्यविग्रहस्य सन्निवेशैकरूप्यं वा विवक्षितम्। चिन्त्यत्वेन चोदितस्याप्यचिन्त्यत्वोक्तिरितरसजातीयतया चिन्तयितुमशक्यतामाह, तेन अनित्यत्वादिसाधकस्यावयवत्वाद्यनुमानाना धर्मिग्राहकमानबाधोऽभिप्रेतः। दिव्यशब्दो द्युमत्तमनिरेखादिभिन्न वैलक्षण्यपरो, अप्राकृतस्थानवर्तित्वाप्राकृतत्वपरो वा, 'रूपविशिष्टं दिवि संस्थितं च' 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः।' 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा' इत्यादिभिस्तथोक्तेः। अद्भुतत्वम् 'तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः' 'सर्वाश्चर्यमयं देवम्' 'तेनाश्चर्यवरेणाहम्' 'अपूर्वरूपसंस्थानम्' इत्यादिप्रसिद्धनिरतिशयवैचित्र्यवत्त्वम्। नित्यत्वमपि 'नित्यालिङ्गा स्वभावसंसिद्धिः' 'नित्यं नित्याकारभरम्' इत्यादिभिरुक्तम्। तेन शुभाश्रयप

द्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्य-

रविग्रहस्य कल्पितत्वकृतकत्वादिपक्षा प्रतिक्षिप्ता । अवतारविग्रहाणामपि सन्यानामेव तथैव विभागाविभागावुपदिष्टौ, तेषां प्रत्येकमपि निरपेक्षाधीनता केचिदाहु । निरवद्यत्व क्षेत्रज्ञशरीरवत् कर्ममूलत्वदु खावहत्वादेरभावात् । दिव्यात्मस्वरूपे प्रकान्तयोगपुरुषयोरुत्तमात्मनत्वरूपमप्यवद्य दिव्यविग्रहे नास्ति, तस्य यथाश्रुत यथादर्शन च सुखानुसधेयत्वात् । इह स्वस्वीश्वरापेक्षया न किंचिदपि प्रतिकूलम्, सर्वस्य तदनुकूलतयैव प्रमाणसिद्धत्वात् । तस्य तु परप्रतिकूलसर्वाश्रयस्यापि स्वप्रतिकूलैरहिततया समस्तहेयरहितत्वोक्ति । एव मुक्तनित्यापेक्षयापि न कस्यचित्प्रातिकूल्यम्, तेषामीश्वरेण समानभोगत्वात् । अचेतनापेक्षया तु प्रतिकूलानुकूले कदाचिदपि न स्त । तस्य हेयमुपादेय च नास्ति । तस्य सा नवद्योक्तिस्तु चेतनविशेषप्रतिकूलस्वभावयोगितया तदपेक्षा । क्षेत्रज्ञानां तु स्वप्रतिकूलदु खतत्कारणसबन्धात्मावद्यत्वम् । ईश्वरबुद्धिविशेषरूपस्य क्षेत्रज्ञकर्मसाध्यनिग्रहस्यापि कर्मवश्यगोचरतया तद्दोषत्वमत्र, ईश्वरस्य त्वसौ प्रशासनरूपतया गुण एव । एव स्थिते दिव्यविग्रहस्य निरवद्यत्वोक्तिरीश्वरापेक्षया तदाश्रितापेक्षया च शरीरत्वादिशङ्कितप्रतिकूलस्वभावराहित्यपरा । निरतिशयत्वम् औज्ज्वल्यादिपु सर्वेष्वन्वीयत तच्च तदपेक्षयोत्कृष्टाभावात् अनुत्तमत्ववत् । औज्ज्वल्यम् 'आदित्यवर्णम् दिवि सूर्यसहस्रस्य' इत्यादिपूक्त भास्वरतमत्वम् । सौन्दर्यम् अवयवशोभा यत 'साक्षान्मन्मथमन्मथ' इत्युच्यते । 'सर्वगन्ध' इति श्रुतिरनुकूलगन्धविषया । अत्र चन्दनादि चात्र कृतकमित्यभिप्रायेण सौगन्ध्यशब्द । सौकुमार्य महाबलत्वेऽपि 'पुष्पहास' इति नाम दुहान मार्दवम् यथोक्तम्— 'सुकुमारो महाबल' इति । लावण्य समुदायशोभा 'भूयिष्ठ तेज एवाङ्गैर्यद्भूत्वामिमृदूकृतम् । चक्षुरानन्दजनन लावण्यमिति कथ्यते ॥' इत्याहु ॥

यौवनमिह न कालकृतावस्था, किंतु तादृशो विग्रहस्वभाव, तथो

यौवनाद्यनन्तगुणनिधिदिव्यरूप, स्वाभाविकानवधिकातिशयज्ञान-

घनस्य नित्यत्वात् । अन्येषामपि हि यौवने कौमारानन्तरभावित्वमुपलक्षणमात्रमेव, युक्तयैव केषाचिदुत्पत्तिश्रवणात् । आदिशब्देन शुभाश्रयादिप्रकरणोक्तसर्वगुणसग्रहः । तत एवानन्त्यम् । निधिशब्द इहाश्रयपरो निरतिशयभोग्यत्वव्यञ्जकश्च ॥

एवमुपकारकसमत्वाद्यभिप्रायेण गुणेभ्यः पूर्वं विग्रह उक्तः । अथेदृशविग्रहाभिव्यङ्ग्यमदृष्टगुणभूयिष्ठमाह—स्वाभाविकेति ॥ अत्र सर्वगुणकन्दभूतैराश्रितगोचरव्यापारभेदसाधारणैर्ज्ञानादिभिः परत्वम्, आश्रितरक्षणैकान्तैः सौशील्यादिभिः सौलभ्यं च व्यज्यते । स्वाभाविकशब्देन नित्यत्वमनन्याधीनत्व चात्र विवक्षितम्; ताभ्या मुक्तनित्यज्ञानादिभ्यो व्यवच्छेदः । तद्बलादिभ्यो व्यवच्छेदस्तु अनवधिकातिशयत्वादपि । अनवधिकातिशयशब्दः पूर्ववत् । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्याम्नात स्वाभाविकत्व परत्व च सर्वेषु गुणेषु योज्यमिति भावः । सङ्कर्षणादिव्यूहत्रयाभिव्यक्तिक्रमेण ज्ञानादिगुणद्वन्द्वनिर्देशोक्तिः । प्रत्येक च गुणद्वन्द्वेषु पौर्वापर्यहेतुर्भगवच्छास्त्रोक्तः; यथा— 'बल वीर्यं तथा तेज इत्येतत्तु गुणत्रयम् । श्रमाद्यवद्यामावाख्य ज्ञानादेरुपसर्जनम् ॥'' इति । ज्ञानमिह सर्वसाक्षात्काररूपम्, 'यः सर्वज्ञः सर्ववित् सर्वदर्शी स्वाधीनोऽनादिः सर्वेश्वरः सर्वदृक्' इत्यादिभ्यः । उक्त च नाथमुनिभिः— 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति । बल नाम श्रमप्रसङ्गरहित सर्वधारणसामर्थ्यम् 'एष सेतुर्विधरणः' 'यत्र विश्वं भवत्येकनीडम्' 'तस्तम्भितुर्वरेण्यम्' 'ध्रुवमचलममृत विष्णुसंज्ञं सर्वाधारं धाम' 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'। 'परमात्मा च सर्वेषामाधारः परमेश्वरः ।' इत्यादिसिद्धम् । ऐश्वर्यम् 'एष सर्वेश्वरः' 'सर्वेश्वरेश्वरः कृष्णः' इत्यादिधृतम् अव्याहतेच्छ सर्वनियन्तृत्वम्; 'अज. सर्वेश्वरः' इति च नामपाठः । वीर्यं सर्वोपादानत्वे सर्वधारणे सर्वनियमनेऽपि विकाररहि

बलैश्वर्यवीर्यशक्तितेज सौशील्यवात्सल्य-

---

तत्वम्, यथोक्तम्—'विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा' इत्यादि। शक्ति स्वेतरसर्वनिर्वाहिका 'जगत्प्रकृतिभावो मे य स शक्तिरितीर्यते' इत्यादिसूक्ता सर्वोपादानत्वात्मिका। यद्वा, यत् अन्यैरशक्यत्वादघटितमिव भाति, तद्घटनसामर्थ्यरूपा। तेज अस्वाधीनसहकार्यनपेक्षत्वम्, तदुक्तम्—'तेजस्त्वन्यानपेक्षता' इति, 'सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या तेज षड्गुण प्राहुस्तमिम तत्त्ववेदिन ॥' इति च। 'न तत्र सूर्यो भाति न चन्द्रतारक नेमा विद्युतो भान्ति कुतोऽयमग्नि ' 'ज्योतींष्यादित्यवद्राजन् कुरून्प्रच्छादयन् श्रिया' इत्यादिनिदर्शित पराभिभवनसामर्थ्यं तेज केचित् प्रचक्षते। लोके कश्चित् स्वापाद्यवस्थाया स्वविभूति न जानाति, जानन्नपि न धारयति, ज्ञात्वा धारयन्नपि न सर्वथा नियन्तु शक्नोति, शक्तोऽपि धारणनियमनाभ्या ग्लानो भवति, अग्लानोऽपि न तत्सत्तास्थितिहेतु स्यात्, तद्धेतुश्च पराधीनसहकारिसापेक्ष स्यात्, नैव मत्स्वामीति गुणक्रमोक्तितात्पर्यम्।

अथ 'तवानन्तगुणस्यापि षडेव प्रथमे गुणा । यैस्त्वयेव जगत् कुक्षावन्येऽप्यन्तर्निवेशिता ॥' 'प्रकृष्ट विज्ञानम्' इत्याद्युक्तषाड्गुण्यविततिरूपा आश्रितसमाश्रयणरक्षणयोर्विशेषत उपयुक्ता गुणा उच्यन्ते। तत्र सौशील्य शोभनशीलत्वम् तच्च अतिमहीयसोऽप्यतिहीनेषु गुहगोपालादिष्वपि साध्वसप्रशमनानन्यप्रयोजननीरन्ध्रसंश्लेषस्वभावत्वम् यथोक्तम्—'गुहेन सहितो राम' 'अह वो बान्धवो जात' इत्यादि। वात्सल्यम् 'शरणागतवत्सल' इत्याद्यभिप्रेता स्वरक्षणीयतयाभिमतेषु दोषतिरस्कारिणी प्रीति । दोषाणा गुणत्वेन दर्शनमिति त्वतिवाद । क्षमाकाष्ठाभूतवात्सल्यकथनेन क्षमाप्युक्ता भवति, 'अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्य सम्यग्व्यवसितो हि स ॥' 'अपि पापेष्वभिरता मद्भक्ता पाण्डुनन्दन । मुच्यन्ते पातकै सर्वै पद्मपत्रमिवाम्भसा ॥' इति चाह।

चातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसंकल्पकृतित्वकृतज्ञता-

त्वम्, प्रभूत दत्त्वायतमत्व च । अत एव ह्यर्थिन सर्वान्श्रयमुदागनाह । चातुर्यम् 'रथर्णायेषु जनयन्प्रत्यय तदा इत्यादिप्रसिद्धमतिशङ्काशमन-दोषगोपनादिरूपमजडक्रियत्वम् येन विभीषणसुमुखादिषु विरुद्धानप्यनु कूलयति, शुभाश्रयस्वाकारप्रदर्शनाद्ययनापायैर्विषयवैराग्यादिरू च जन-यात । स्थैर्य शरणागतसंग्रहे दोषप्रदर्शकैरन्तरङ्गैरप्यकम्पनीयत्वम्, तथा चाह— 'मित्रभावेन सम्प्राप्तं न त्यजेयं कथंचन' इत्यादि । धैर्यम् 'अप्यह जीवित जह्याम् इत्यादयुक्तमत्यन्ताभिमतवियोगप्रसङ्गेऽप्यभिन्नप्रतिज्ञत्वम्। भीग्मात्याश्रितप्रतिज्ञारक्षणाय स्वप्रतिज्ञाभङ्गेऽप्येतादृशप्रतिज्ञासिद्धि अत एव 'द्यौ पतत्पृथिवी शीर्येत् हिमवान् शकलीभवेत् । शुष्येत्तोयनिधि कृष्ण न मे मोघ वचो भवत्' इत्यादिभिरविरोध । व्यत्ययेन वा स्थैर्यधैर्ये व्याख्यानव्य । अतर्कितोपनतेऽपि बलवति प्रतिपक्षे मावशदृढचित्तत्व वा धैर्यम् यथाहु — 'कपोतेः जानक्या इत्यादि । जीवत्यपि महाबल रावण सागरेऽप्यलङ्घिते विभीषणमभिषिञ्चता दर्शितोऽय गुण । शौर्यम असहायस्यापि भीमे परबले स्वबल इव निर्भयप्रवेशसामर्थ्यम्, यथा— जनस्थानयुद्धमृत्यवर्लनिबर्हणादिषु । पराक्रम प्रविश्य परसैन्ये 'छिन्न भिन्न शरैर्दग्धम् इत्याद्युक्तो व्यापार । अभियाता प्रहर्ता च इत्याद्युक्तानिमौ द्वौ गुणौ आश्रितविरोधिभङ्गार्थौ धैर्यादयस्त्रयो वा ॥

*अथेष्टप्रापणार्थौ गुणावाह*— **सत्यकामसत्यसंकल्पेति** ॥ इह एतौ भावप्रधानौ, कर्मधारयवृत्तौ वा । काम्यन्त इति कामा, स्वेन स्वाश्रितैश्च भोग्या विभूतय ते च सत्या नित्या इत्यर्थ । अमिथ्याभूतकामत्वम् अप्रतिहतस्वच्छत्व च नैरर्थक्यपुनरुक्तिभ्या नात्र विवक्षितम् । सत्यसंकल्पत्व स्वावताराशपूर्वभोग्यान्तरसृष्टौ जगद्व्यापारमोक्षपदानादिषु चामोघसंकल्पत्व म तेन तत्संकल्पादभिमतलाभ नि सशयत्व स्यात् ॥

उक्तगुणवर्गादभिकारकारक गुणद्वयमाह— **कृतित्वकृतज्ञतेति** ॥

## असङ्ख्येयकल्याणगुणगणौघमहार्णव,

कृतमिह उपकारः, कृतज्ञादिशब्दे तथा दृष्टेः, तद्वत्त्वं कृतित्वम्, उपकर्तृत्वमित्यर्थः। यद्वा, 'अभिषिच्य च लङ्कायाम्' इत्याद्युक्तमाश्रितकार्यपूरणेन कृतकृत्यत्वम्, कर्तव्यशेषरहितेषु कृतिशब्दप्रयोगात्। 'न मे पार्थास्ति कर्तव्यम्' इत्युक्तविहितानुष्ठाननैरपेक्ष्य धर्मप्रवर्तनार्थानुष्ठानत्वं वा विवक्षितम्, तेनापि परोपकारार्थमेव प्रवृत्तत्वमुक्तं भवति; श्रूयते च—'न कर्मणा वर्धते नो कनीयान्' इति, तथाच, श्रुत्यन्तरम्— 'स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्' इति। अथवा आदिकर्मणि क्तः, कृत कर्तव्यत्वेनोपक्रान्तम् आश्रितानां यद्धितम्, तत्सर्वं पूर्वमेवानेन प्रयोजककर्त्रा प्रारब्धमित्यर्थः। एतेन कृतं परोपकारं प्रत्यपि स्वस्यैव शेषित्वं वा कृतित्वम्। कृतज्ञता परैः कृतस्यानुकूल्यस्वस्य पश्चात्तैरनन्तापकारकरणेऽपि स्वयं चानन्तप्रत्युपकारकरणेऽपि अकृतप्रत्युपकारवत् तदनुपश्यपर्यन्तस्मरणाय तस्यैवानुदर्शनम्, यथोक्तम्— 'न स्मरत्यपकाराणां शतमप्यात्मवत्तया। कथञ्चिदुपकारेण कृतेनैकेन तुष्यति॥' इति, 'गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम्।' 'त्वदङ्घ्रिमुद्दिश्य' इत्यादि च। एतेन सञ्चितानां पश्चाद्दोषसमयेऽपि हितैषिणा शिक्षणमात्रप्रवृत्तत्वं सिध्यति। अथ वा, अर्थिषु नियमान्तरानुसारेण स्वकृतं तादात्विकप्रत्याख्यानमकृत्यवज्जानातीति कृतज्ञः; यदूचे— 'शिरसा याचतस्तस्य वचनं न कृतं मया।' इति। इदं च प्राप्तावसरे भरतस्येष्टापेक्षापूरणाय स्यात्॥

आदिशब्देन आनृशंस्यमनुक्रोशः इत्यादिप्रसिद्धसर्वगुणसङ्ग्रहः। असङ्ख्येयशब्दः 'यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक। तथा गुणा ह्यनन्तस्याप्यसङ्ख्येया महात्मनः॥' इत्यादिवचनस्मारकः। आश्रितविरोधिनिरसनार्थतया क्रोधादेरपि कल्याणशब्देन सङ्ग्रहः। 'चतुर्मुखायुर्यदि कोटिवक्त्र.' 'वर्षायुतैर्यस्य गुणा न शक्याः' इत्यादिप्रसिद्धापरिच्छेद्यगुणानन्त्यं तापत्रयप्रशमनत्वं दुरवगाहत्वं च व्यनक्ति गुणगणौघमहार्णवेति॥ एकैक

**स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषण,**

---

गुणस्यावान्तरानेकगुणगर्भत्वं गणशब्देन व्यज्यते । गुणगणा यत्र ओघाः जलप्रवाहाः, तेषां महार्णव इवायमेकाश्रयभूत इति भावः ॥

अथ स्वरूपस्य विग्रहवत् गुणवच्च विग्रहस्य शोभातिशयहेतुभूतानि भूषणान्युच्यन्ते— स्वोचितेति ॥ उक्तस्वरूपरूपगुणवत् स्वस्यानुरूपत्वं स्वोचितत्वम् । किरीटत्वादिभेदस्य तत्तत्स्वरूपोपादानसिद्धत्वात्, आश्चर्यत्वस्य पृथगुक्तेश्च, अत्र विविधविचित्रशब्दौ हेमरत्नमुक्तादिमयत्वेन तत्तदवान्तरशिल्पविशेषैश्च प्रत्येकं वैषम्यं ब्रूतः । अनन्तशब्दश्चाश्चर्यविशेषकः । असंख्येयत्वविवक्षायामपरिमितशब्दः पृथुतरत्वपरः । नित्यनिरवद्यत्वाभ्यां प्राकृतभूषणव्यावृत्तिः, 'स्वयम्भाभरणैर्युतम्' इति हि नित्यं रूपं प्रतिपाद्यते । सर्वदा निरवद्यत्वेन वा कादाचित्कावद्यशङ्काव्युदासः । सर्वगन्धस्यापि दिव्यरूपस्यामोदातिशयहेतुतया निरतिशयसुगन्धत्वम् । अनभिमतकाठिन्याद्यभावात् निरतिशयसुखस्पर्शत्वम् । सूर्यादितेजोऽभिभावुकदिव्यविग्रहतेजसाप्यनभिभूतत्वात् निरतिशयौज्ज्वल्यत्वम् । कर्णिकामकुटव्यावृत्त्या सर्वाधिपत्यसूचनार्थं किरीटशब्देन मकुटविशेषणम् । धारकपुरुषभेदेन हि मकुटद्वैविध्यं शिल्पशास्त्रादिप्रसिद्धम् । यद्वा, 'नाकुलस्य मकुटी' इति प्रयोगात् शिरोभूषणमात्रे मकुटशब्दः । अथ वा, किरीटस्योर्ध्वभागो मकुटशब्देनोच्यते । मकरसन्निवेशं कुण्डलं मकरकुण्डलम् । अविभक्तलक्षणरूपस्यापि श्रीवत्सस्य भूषणसमानतया भूषणत्वोक्तिः, तादृशपृथक्संस्थानयोगाच्च । भूषणदेवताध्याने तदभिव्यक्तिः । मुक्तादामानि एकावलीत्रिसरादीनि । पीताम्बरस्य भूषणत्वोक्तिः शोभातिशयहेतुत्वमदर्शत्वाभिप्राया, यथा— 'अतसीपुष्पसङ्काशं पीतवाससम्

स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदासिशार्ङ्गाद्यसंख्येयनित्यनिरवद्यनि-
रतिशयकल्याणदिव्यायुध,

जनार्दनः । स्वभ्राजत सभामध्ये हम्मीरोरचिता मणिः ॥ इति । आदिशब्देन च हस्तस्थ धाङ्गुलीयकादिसंग्रहः । उक्तगुणोत्कर्षहेतुभूतद्रव्यवैलक्षण्यज्ञापनाय भूषणायुधयोर्दिव्यशब्दः ॥

एवमाश्रितानामनुभवार्थानि भूषणान्युक्त्वा तदनुभवसंरक्षणयारुपयुक्तानि दिव्यायुधान्याह— स्वानुरूपेति ॥ पूर्वोक्तविग्रहादिविशिष्टापेक्षया स्वशब्दः । तत्तदानुरूप्यं यथोचितं ग्राह्यम् । सर्वेषामायुधानां यथायुधकार्यैकरत्वात् अचिन्त्यशक्तित्वाक्ति । कुठारटङ्ककुद्दालादिकार्यं सालशैलवसुधातलभेदनमकुर्वन् शरेण कृतमुच्यते 'बिभेद च पुनः सालान्' 'सहायकृत्यं किं तस्य' इत्यादिभिः । यद्वा, नित्यसूरिसमाविष्टतया तदिच्छानुगुणविचित्रकार्यसामर्थ्यमिह विवक्षितम् । उक्तं चोत्तरश्रीरामायणे— 'शरा नानाविधाश्चापि धनुरायतविग्रहम् । अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः' इति । चक्रस्य हेतिराजत्वेऽपि शङ्खस्य पूर्वोक्तिः सर्वशक्तेर्भगवतो मोक्षप्रदानशक्तिसूचकतया अभ्यर्हितत्वाभिप्राया । यथोक्तं परमसंहितायाम्— 'सृष्टिबीजं तथा पद्मं चक्रं स्थितिनिबन्धनम् । गदा संहारबीजं तु शङ्खं मुक्तिनिबन्धनम्' इति । एवमन्यत्रापि । अत्र पद्मानां कण्ठोक्तिः प्राधान्यात् । पञ्चायुधानि पञ्चभूतशक्तिरूपाणीति भागवते प्रोक्तम्, अस्त्रभूषणाध्यायादिषु महदादितत्त्वरूपाणीति तदुभयं तात्पर्यभेदादविरोधेन नेयम् । आदिशब्देन हलमुसलादिसंग्रहः । सहस्रभुजविश्वरूपादिविग्रहे आयुधानामसंख्येयत्वम् । 'अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्' इत्यादिभिः सुव्यक्तम् । नित्यनिरवद्यत्वं पूर्ववत् । शुभलक्षणपौष्कल्यात्, आभरणकोटावपि निवेश्य आभिमुख्यहेतुत्वात्, अनुकूलसम्बन्धभावत्वात्, मुमुक्षुप्रत्यर्थिनिग्रहविरोधिनतया मोक्षोपयोगित्वाच्च निरतिशयकल्याणत्वम् ॥

अथैवंविधभूषणायुधादिविशिष्टस्य निरुपाधिकभोग्यस्य सर्वं प्रधा-

**स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ, एवंभूतभूमिनीलानायक,**

---

नभोक्तृत्वेनावस्थिता देवी प्रतिपादयन् प्रथमं व्याख्येये प्राप्यप्रापकदशयोर्नित्यान्वितत्वेन निर्दिष्टां श्रियमादरातिशयादुक्तप्रकारविशिष्टत्वे प्रमाणदार्ढ्यद्योतनाय पूर्ववत्पुनराह— **स्वाभिमतेति** ॥ श्रिया वल्लभ इति विग्रहे 'नित्यानुकूलं स्वतः' इत्यादिप्रसिद्धस्वभावाया श्रियाऽप्यसौ नित्यानतिशयभोग्य इति दर्शितं स्यात् । श्री वल्लभा यस्येति विग्रहे तु, प्रियतमया तया निवेदितं न प्रत्याख्यातीति फलति । ईदृशं चाभिमतत्वम् 'न जीवेयं क्षणमपि विना तामसितेक्षणाम्' 'न त्वहं वा विना सीता जीवेयं हि कथंचन' 'कच्चिन्न तद्धेमसमानवर्णम्' 'कुर्यां यदि काकुत्स्थ' 'मत्कृते काकमात्रे तु' 'यदि राम ममद्रान्ताम्' 'दुष्करं कृतवान् राम' इत्यादिभिस्तात्पर्यवृत्त्या व्यज्यते ॥

नित्यनियतप्राधान्यतारतम्यक्रमेण श्रिया सहैकासनस्थे देव्यौ तच्छायासकाशतया दर्शयति—**एवंभूतेति** ॥ तदाह —'देवि त्वामनु नीलया सह मही देव्य सहस्रं तथा' इति । उपदिश्यमानधर्माधारादतिदिश्यमानधर्माधारस्य स्वतः प्रातवैगम्याविरोधेन साम्यं व्यवस्थाप्यम् । परत्वेऽपि देवीत्रयसम्बन्धः प्रमाणसमतः, यथोक्तं पाञ्चरात्रे— 'देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः । सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तु चाखिलैः ॥ शङ्खचक्रधरो नित्यं जानुन्यस्तैकहस्तवान् । अभयप्रदहस्तश्च नीलजीमूतसंनिभः ॥ ध्यातव्यो नित्यलोकस्थो भुक्तिमुक्तिफलप्रदः ।' इति । नित्यमध्ये ध्यानं [illegible] 'नागभोगे विन्यस्तवामभुजम् । इत्येतत् सहितान्तरमूलम् । एतेन वर्णभुजादिविप्रतिपत्तिरपि निरस्ता । अचिन्त्यशक्तेरीश्वरस्य स्वच्छन्दवृत्तं परसंस्थितरूपेऽपि तत्तत्प्रतिपत्त्यर्थं तत्तत्संहितोक्ता विशेषा नान्योन्यबाधमर्हन्ति । यथा नरसिंहरूपे सप्तसप्ततिभेदा यथा च 'कृष्णरूपाण्यनन्तानि' इत्युच्यते, एवं परव्यूहादिष्वपि यथापदेशं सर्वस्य सत्यत्वम् ।

**परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वाभिमतविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभ-**

---

अनुग्रहाविमलाद्या , तथा कान्तिवारुणीसूत्रवतीरुदासुकीर्तिप्रभृतय शेषा दिपत्न्य ता अपि हि तेषा यथार्ह सन्ति पुरस्वामिसेवार्था । एवम् 'गुणैर्दास्यमुपागतम्' इति न्यायेन स्वामिविग्रहगुणैररि कैङ्कर्ये प्रेरितत्वम-भिप्रेत्याह— परिचरितचरणयुगलेति ॥

एव नित्यविग्रहादियुक्तस्य नित्यसूरिसेव्यस्य मुक्तगम्य निवासस्थान माह— **परमेति** ॥ 'परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभाव इति स बुद्धयन्त केचिद्यान्वक्षते, तदा पूर्वोक्ताना सर्वेषा परत्वसौलभ्योपयोगित्वज्ञापनाय तदुभय स्वरूपस्वभावशब्दाभ्या विवक्षितम्, स्वरूपनिरूपक निरूपितस्वरूपविशेषक चेति धर्मवर्गद्वय वा । एव सति पूर्वोक्तमेव मुखान्तरेण वस्तरे निगमित स्यात्, इतो नरमनुक्तपरमव्योमप्रकर्षकथनम् । तथा च तद्विशेषणतयैव समन्यन्तत्वेन श्रीवैकुण्ठगद्येऽप्येतत्पठितम् । परमयोगिन साक्षात्कृतपरब्रह्मस्वरूपा श्वेतद्वीपवासिन , 'ये तु मुक्ता भवन्तीह नरा भरतसत्तम । तेषा लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् ॥' इति हि स्मर्यते। परमव्योम्न स्वरूप शुद्धसत्त्वमयम् । तमस परस्यापि परम व्योमस्वरूपस्या परिच्छेद्यत्वमूर्ध्वादिभागेन व्यवस्थाप्यम् । तत्स्वभावो भोग्यतमत्वादिरूप । विविधशब्दो भोग्यप्रभृतिषु निष्वप्यन्वेतव्य । भोग्यम् अप्राकृत स्वाश्रय शब्दादि । तदुपस्थापकतया स्वीकृतानि भोगोपकरणानि । भोगस्थानानि क्रीडापर्वतादीनि । स्वरूपगुणसस्थानादिवैचित्र्यातिशयेन नियमपूर्वंवदनुभाव्यतया अनन्ताश्चर्यत्वम् । प्रत्येक महद्भिरसख्यातैश्च रत्नभूषणभद्रासनादिभिर्योगादनन्तमहाविभवत्वम्, पर्यङ्कविद्यादिषु हि विचित्रनदीहदसभादिविशिष्ट मुक्तगम्य स्थानमुपदिश्यते— 'सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते—' इति च तत्त्वकारा अधीयते । पूर्वोक्तापरिच्छेद्यत्वे हेतुरनन्तपरिमाणत्वम् । आनिष्यत्रयस्थानान्तरव्यव-च्छेदार्थमिह नि

वानन्तपरिमाणनित्यनिरवद्यनिरतिशयवैकुण्ठनाथ,

स्यनिरवद्यत्वोक्तिः । अत्र पञ्चोपनिषत्प्रतिपाद्यानां भूतानां तत्सङ्घातरूपाणां च केषाञ्चित् भगवन्नित्येच्छत्वेन नित्यत्वमविरुद्धम् । त्रिगुणवस्तुधर्मिणां भगवत्स्वरूपतिरोधानादिहेतुताभावात् निरवद्यत्वम् । निरतिशयत्वं स्थानगुणैः सर्वैः सर्वस्थानातिशायित्वम् । यथोक्तं महाभारते — 'रम्याणि कामचाराणि विमानानि सभास्तथा' इत्युपक्रम्य, 'एते वै निरयास्तात स्थानस्य परमात्मनः ।' इति, 'आत्मा येयमना प्राप्तो यत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥' इति च । 'कुठि गतिप्रतिघाते' इति धातुः गतिः अवगतिः । ज्ञानप्रतिघातकर्मप्रसङ्गरहिता नित्यसूरयो विकुण्ठाः, तैः समन्नादस्य वैकुण्ठशब्दोऽप्राकृतस्थानपरः ; 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' इत्यादिभिस्तत्सिद्धिः । अत्र हि व्यतिरेकविभक्तिस्वारस्यात् 'परमे व्योमन्' इत्यादिभिरैकार्थ्याच्च परमपदशब्दो न परमात्मस्वरूपपरः । 'नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ।' 'दिव्यं स्थानमजरं चाप्रमेयम्' 'एकान्तिनः' इत्यारभ्य 'तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ।' इत्यादिभिः स्थानविशेषस्य स्पष्टोक्तेः । न चैतद्ब्रह्माण्डान्तर्वर्तिभगवल्लोकविषयत्वम्, तदन्तर्वर्तिनां सर्वेषामुत्पत्तिनाशश्रवणात्, एतस्य च नित्यत्वाक्षरत्वाजरत्वोक्तेः, 'अण्डं भित्त्वा तथोद्भूता' इत्यादिभिरण्डबहिर्भूतत्वसूचनाच्च । तथापि त्रिगुणान्तर्भावोऽस्त्विति चेत्, न; तमसस्त्वादर्शाच्च सुबालोपनिषदि प्रलयप्रतिपादनात्, मुक्तगतौ शीर्षकपालप्रभृति तमःपर्यन्तं तत्त्वभेदेन गन्तव्यदेशाभिधानात्, 'आदित्यवर्णं तमसः परस्तात्' 'तमसः परमो धाता शङ्खचक्रगदाधरः ।' इत्यादेश्च । नाथ ईश्वरः । 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' इति नाथतेरैश्वर्यार्थत्ववचनात् तस्मिन् दिव्यदेशे भगवत ऐश्वर्यं देशाध्यक्षहेतुकमत्यर्थमिति भावः ॥

एवं नित्यविभूतियोग उक्तः ; अथ तदितरलीलाविभूतियोग

स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुष-
कालात्मकविविधविचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्था-

वदन् 'कारणं तु ध्येयः' 'यो ब्रह्माणं विदधाति पूर्वम्', इत्यादिप्रसिद्धस्य मुमुक्षुसमाश्रयणीयस्य 'यतो वा इमानि भूतानि जायन्ते', 'जन्माद्यस्य यतः', इत्याद्युक्त लक्षणमप्याह— स्वसंकल्पेति ॥ बद्धानामीश्वराभिमता परिज्ञानेन प्रायशः प्रवृत्तिरिति ज्ञापयितुम् अचित्समभिव्याहारेण सर्वत्रि दचित्साधारण सकल्पानुविधायित्वमुक्तम्, प्रकृत्यादीनां स्वरूपस्थित्यौ रीश्वरनित्येच्छायत्तेन नित्यसिद्धत्वमिहाभिप्रेतम्, प्रवृत्तिषु तु सङ्कल्पजन्य त्वम्, प्रकृतेः स्वरूपं त्रैगुण्येन निरूप्यम्, समष्टिपुरुषस्य तु सङ्कुचित- ज्ञानत्वेन, कालस्य तु कलामुहूर्तादिमयत्वेन, त्रयाणां स्थितिः पूर्ववत् । प्रवृत्तिः व्यापारः । अत्र प्रकृतिग्रहणं प्राकृतानामप्युपलक्षणम् । तेन नारा यणशब्देन 'नराज्जातानि तत्त्वानि' इत्याद्युक्तनिरुक्तिः सूच्यते । प्रकृत्या त्मकजगदुक्त्या वा कार्यतत्त्वसमूहः । लीलाविभूतेरशेषत्वान्यशेषत्वभ्रमसंभ वस्थानत्वात् तदपनोदनाय अत्र स्वशेषतैकस्वभावत्वमुक्तम् । शेषत्वस्य शरीरलक्षणत्वसिद्ध्यै यावत्सत्ताकत्वमिह विवक्षितम्, तथा निरुपाधिका न्यशेषराहित्यं च । अत्र शरीरस्वभावेष्वाधेयत्वादिषु सङ्कल्पानुविधायित्वो क्त्या नियाम्यत्वं ज्ञायते । आधेयत्वमप्यभिप्रेतम् । प्रकृत्यात्मकस्त्व भोग्य भोगोपकरणादौ । समष्टिव्यष्टिपुरुषविभागरूपतया पुरुषात्मकस्त्व भोक्तृवर्गे । अत्र भोक्तृत्व कर्मोपाधिकम् । परमपदे तु निरुपाधिकभोक्तृणां सतामप्य मुक्तिस्तत्रत्यानां स्वाधीनस्वार्थभोक्तृत्वभ्रमराहित्याभिप्रायेण । क्षणलवादिषु कालावच्छेदेषु कालात्मकत्वम् । तेषां जगच्छब्देन ग्रहणम् अभूत् अस्ति भविष्यतीत्यादिरूपेण जगद्विशेषणत्वप्रतीत्यनुसारात् । व्यापकस्यापि कालस्य लीलाविभूतिमात्रे पठनम् 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः' 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इति नित्यवि- भूतेरकालकाल्यत्वज्ञापनार्थम् । तत्र तत्तदनित्यसद्भावेऽपि लीलाविभूतिवत्

नरूपनिखिलजगदुदयविभवलयलील, सत्यकाम, सत्यसङ्कल्प, पर-

---

कालनियमो नास्तीति विशेषः । भोग्यप्रभृति सर्वं प्रत्येकं त्रिविधम् । तत्तद्‌यान्तरविशेषविवक्षया विचित्रत्वोक्तिः । आश्चर्यतया वा, 'जगदेतन्महाश्चर्यं रूपं तस्य महात्मनः' इति ह्युच्यते । एकैकवर्गव्यक्तीनामसङ्ख्यातत्वादनन्तत्वम् । भोग्यभोगोपकरणादीनि पूर्ववत् । प्राकृतत्वादिरिह विशेषः । भोगश्चात्र सुखदुःखानुभवो मतः । महदादीन्यनन्तब्रह्माण्डादीनि च सङ्गृहीतानि निखिलशब्देन कतिपयजगत्कारणविरिञ्चादिव्यावृत्तिः । निखिलजगदुदयादेरेकैककर्तृकत्वेन ब्रह्मलक्षणत्वसम्भवेऽपि व्यष्टिसृष्ट्यादिनीत्या सम्भवन्तीं भिन्नकर्तृकत्वशङ्कां निरसितुमिव निखिलोक्तिः । जगन्निष्ठानामुदयविभवलयानां परमपुरुषलीलात्वोक्तिः सर्वशरीरतया तत्तद्विशिष्टरूपेण तत्तदवस्थो भवतीत्युपादानत्वसूचनार्था । परिपूर्णतया प्रयोजननिरपेक्षस्य कथं जगद्व्यापार इति शङ्कानिरसनाय लीलाशब्दः । 'क्रीडतो बालकस्येव' 'क्रीडा हरेरिदं सर्वम्' 'हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः' । 'लोकवत्तु लीलाकैवल्यम्' इत्यादिभिस्तत्सिद्धिः । लीलारूपप्रयोजनवत्ताऽप्यवाप्तसमस्तकामत्व सत्यत्वाविहतेच्छत्वम् ॥

एवं नारायणशब्दोक्तं शरण्यत्वं यथानिरुक्ति समर्थितम्, अथ 'सत्यकाम' इत्यादि पूर्वापरपुनरुक्तिपरिहाराय प्रस्तुतप्रयोजनेषु इदं समाख्याष्टकं प्रमाणाभिप्रायत इति केचिद्व्याचख्युः । तत्र चतुर्णां समाख्यात्वं व्यक्तम् । सत्यकामादिशब्दानां कथंचित्समाख्यात्वं कल्प्यम् । परब्रह्मभूते त्वत्र तु ब्रह्मशब्दमात्रं समाख्या, अन्यथापि नामत्वकल्पने गौरवं स्यात् । अत्र परशब्देन विशेषणं त्वौपचारिकप्रयोगव्यवच्छेदार्थम् । सत्यकामसत्यसङ्कल्पशब्दौ पूर्वं विशेषणमात्रपरतयोक्तौ, इह न तत्प्रमाणतया यथाश्रुति तन्निर्दिष्टनिर्विषयतयेति विशेषः । लीलापदसूचितं जगन्निमित्तत्वमपि सत्यसङ्कल्पत्वेन स्थापितम्, जगदुदयादिलीलाशब्दोदितमुपादानत्वं तु 'परब्रह्मभूत' इत्यनेनाभिप्रेतम्, 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्याद्युक्ता

**ब्रह्मभूत, पुरुषोत्तम, महाविभूते,**

रात् । एवमभेदश्रुतिबलादुपादानत्वाभिमतस्य ब्रह्मणः स्वरूपपरिणामपक्षेण चिदचिद्गतसर्वदोषान्वयः शङ्क्येतेति तत्परिहाराय स्वयमेव गीतं श्रुत्यर्थमाह— **पुरुषोत्तमेति** ॥ अत्र पञ्चम्यादिविभक्तित्रयेऽपि समासो द्रष्टव्यः ।

नन्वेवं भेदाभेदश्रुत्योर्विरोधादन्यतरबाधः स्यादित्यत्र घटकश्रुतिसिद्धमाह— **महाविभूते इति** । विभूतिशब्दोऽत्र नियन्तव्यपरः । 'यदण्डम्' इति श्लोकार्थं इहानुसन्धेयः । शरीरतया विभूतित्वादत्र स्वरूपभेदेऽपि सामानाधिकरण्यं मुख्यमिति भावः । एवं सर्वविलक्षणस्य सर्वनियन्तुर्जगद्व्यापारलीलायां स्ववल्लभासामरस्यमभिप्रेत्याह— **श्रीमन्निति** ॥ 'विभूतिं प्रति शेषित्वं द्विष्ठमित्यभिप्रयन्नाह— श्रीमन्निति' इति व्यासार्याः । विभूतिनामाधेयत्वादिनियमैः शरीरत्वं व्यञ्जयितुमाह— **नारायणेति** ॥ नित्यविभूतियोगं शुद्धसत्त्वमुपादानत्वं च प्रभूतोपकारकत्वज्ञापनाय विशेषतः सूचयति— **वैकुण्ठनाथेति** ॥ इदं सम्बुद्धिद्वयं वा, तदा तु सत्त्वादिसाम्यात्कामप्रतिघातुकरहितदेशादिसम्बन्धी वैकुण्ठः । अपेक्षितसिद्ध्यर्थं सर्वैरपि याचनीयस्तत्प्रदानादावीश्वरश्च नाथः ॥

एतत् 'सत्यकामः' इत्यादिपदाग्रं प्राप्याकारनिष्कर्षार्थमिति पक्षमपि प्रगुणीकुर्म — 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति कामशब्दोदितानां ब्रह्मगुणानामपि प्राप्यतामित्यभिप्रेत्याह— **सत्यकामेति** ॥ प्राप्यानुप्रविष्टनित्यविग्रहविभूतिद्वययोगेऽपि केचित्सत्यकामशब्दं प्रमाणयन्ति । यद्वा, मुमुक्षुणा भोक्तव्यसर्वभोगस्य चोपकरणतया मता नित्याः पदार्था अस्य सन्तीति भावः । प्रार्थितदशायां विभूतिद्वयेऽप्यपूर्वानन्तभोग्यप्रदत्वमाह— **सत्यसङ्कल्पेति** ॥ प्रकृष्टभोग्यतयापि निरतिशयबृहत्त्वमाह— **परब्रह्मेति** ॥ 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिभिरभेदापत्तिशङ्कां परिहरन् ब्रह्मसुखविलक्षणतया कैङ्कर्यैश्वर्यत्वमसमनमाह— **पुरुषोत्तमेति** ॥ कैङ्कर्यस्थानोपकरणादिमहत्त्वमाह— **महाविभूते इति** ॥

श्रीमन्, नारायण, वैकुण्ठनाथ,

मपर्वीकस्य केजयोंदेश्यत्व सूचयति— **श्रीमन्निति** ॥ समन्धगुणविभूति-व्यापारै मर्वैरपि भोग्यत्वातिशय प्रकाशयितुमाह— **नारायणेति** ॥ गरिसेव्यविग्रहविशिष्टस्य देवयानपथिकविश्रमस्थानत्वमभिधायाह— **वैकुण्ठनाथेति** ॥

अत्र तृतीयमपि पञ्च ग्रम — प्रकृतस्य शरण्यस्य स्वीकृतसर्वभरनिर्वहणक्षम सत्यकामादिभिरणाभ पदैरेव बोध्यते **सत्यकाम** काम इह प्रपन्नेभ्यो निरतिशयानन्दप्रदानेच्छा, तस्या सामर्थ्याविनाभावात्सत्यत्वम्, तथ अमोघत्वम् । सत्यसङ्कल्पोऽत्र प्रतिज्ञानिर्वर्तनविषय । 'सर्वपापेभ्यो मोक्षयिष्यामि इति हि ज्ञमेवात्थेति भाव । **परब्रह्मभूत** निरतिशयबृहत्त्वविशिष्टस्त्व स्वाश्रितानपि ज्ञानतो भोगतश्च परमसाम्यपर्यन्त ब्रहयितासि । **पुरुषोत्तम** 'यो मामेवम् इत्यादिना तत्त्वविदा कृतकृत्यत्वोक्त्या स्वनिर्वाह्यसर्वभरत्व त्वयैव सूचितम् । यद्वा पणु दाने' पुरु सनोतीति पुरुष, बहु प्रदेभ्य सर्वेभ्य उत्तमत्वात् पुरुषोत्तम । **महाविभूते** विभूतिरिह विभवनम्, प्रभवनम्, नियमनमित्यर्थ । तस्य महत्त्वमपरिच्छिन्नत्वम्, नश्रिता न्ससारकारागृहान्निर्गमय्य तदर्थतया सर्वं नियच्छसीति भाव, 'अनन्तो देशकालादिपरिच्छेदविवर्जित । महाविभूतिरित्युक्तो व्याप्ति सा महती च त ॥' इत्यत्रापि नियन्तृत्वेन व्याप्तिर्विवक्षित । **श्रीमन्** श्रिया नित्यमनुसक्त्य त्वदभिमतमाश्रितकृत्य निर्वहसि । **नारायण** संबन्धमनुसधाय दायविभागन्यायेन स्वामितया स्वार्थं स्वय स्वात्मान प्रापयितासीति भाव । **वैकुण्ठनाथ** ॥ दिव्यपर्यङ्कसुखासिकाया निजपादमूलसेवा दातुमवस्थितोऽसि । इति त्रिष्वपि पञ्चेषु गुणभेदे पुनरुक्तिपरिहार सिद्ध ॥

अथ शरण्यस्य समर्पितसर्वभरस्वीकरणानुगुणा स्वस्य चाधिकारोपायनिष्पादका उक्ताश्चानुक्ताश्चाकारा अष्टादशाभि पदैर्निकृष्यानुसधीयन्ते, तत्र स्वापराधस्तनिर्घस्तद्धेयसम्बन्धस्वरक्षणनिसादादिदोषपरिहारोपयुक्ताना

अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे,

गुणविशेषाणां प्रकर्षः प्रथममुच्यते— अपारेति ॥ कारुण्यस्यापारत्वम् अवश्यदण्डनीयेष्वस्मादृशेष्वपि प्रवृत्तेः; यथा— 'वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्' इति, स्वेनाप्युक्तम्— 'मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि' इति, 'गच्छानुजानामि रणार्दितस्त्वम्' इत्यादि च। न्यूनाधिकत्व दर्शनजनिताश्रयणासाध्वसपरिहारार्थमिह सौशील्योक्तिः। तस्यापारत्वं विशेषेषु विरिञ्चादिषु विष्ण्वाद्यवतारैः, अनभिमेषु च मत्स्यकूर्मादिषु सत्त्वस्वरूपैरवतारैः, निर्विशेषणीयरम्भप्रश्लेषात्। वात्सल्यस्य अपारत्वं 'रिपूणामपि वत्सलः' इत्युक्तम्। औदार्यस्यापारत्वम् अर्थिषूदारत्ववचनहेतुभूतमर्थिसप्रदाने स्वप्रयोजनाभिसंधिमत्त्वम्, अर्थितेभ्यः सविभूतिकं स्वात्मानं दत्त्वा तदनुबन्धिषु पशुमनुष्यपक्ष्यादिष्वपि अविश्रान्तत्वं वा, श्रूयते हि— 'नास्यावरपुरुषाः क्षीयन्ते' इति, 'नास्याब्रह्मवित्कुले भवति' इति च। ऐश्वर्यस्य कथनमिहानादिकाल स्वरक्षणविपरीतवृत्तान् केनचिद्व्याजेन स्वयमेव नियम्याभिमुखीकरोतीति ज्ञापयितुम्। तस्य अपारत्वम् 'संसारन्यूनताभीताश्छिद्रदर्शाः परिपन्थिनः' इति न्यायेन ब्रह्मादिषु देवेषु सुग्रीवादिषु सुहृत्सु वा विघ्नधानेषु तानपि शरणागतानुगुणीकर्तुं समर्थत्वम्। सौन्दर्यस्य अपारत्वं विरुद्धप्रकृतीनां शूर्पणखादीनां सत्त्वस्थानामृषीणामप्यविशेषेण दृष्टिचित्तापहारितया तुल्यध्यानकत्वम्, असद्वासनाविध्वंसकत्वं च; यथोक्तं श्रीपौष्करे अर्चावतारप्रकरणे— 'सन्दर्शनादकस्माच्च पुंसां सम्मूढचेतसाम्। कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः। कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत्' इति। अतिसुन्दरनित्यविग्रहेण भगवतः परत्वानुसंधानं तत्सान्निध्यकारणमिति च तत्रोक्तम्— 'नित्यसिद्धे तदाकारे तत्परत्वे च पुष्कर। यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत् ॥' इति। तत्सूचनार्थमैश्वर्यसौन्दर्ययोरिहान्यवहितपठनम् ॥

'सर्वस्य शरणं सुहृत्' 'सुहृदं सर्वभूतानाम्' 'सर्वलोकशरण्याय'

अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकजलधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, अशेषचराचर-

'सर्वयोग्यमनायासम्' इत्यादिप्रसिद्धस्वभावस्य वायसवानरराक्षसादिविशेषानादरेणाङ्गीकुर्वतस्ते मादृशजनेऽपि गुणवृत्तादिनिकर्षो न त्यागकारणमित्याह — अनालोचितविशेषेति ॥ अत्र विशेषशब्दविवक्षितमनालोचित गुणगणेति श्रीवैकुण्ठगद्ये व्यञ्जितम्। प्रपत्तेः सर्वाधिकारत्वमपि अनेन प्रकाशितम्। 'दुर्गसंसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः' 'प्रणम्य कृष्णं सहसा' 'एकोऽपि कृष्णे सुकृतप्रणामः' इत्यादियुक्तमल्पयत्नप्रसाद्यत्वमाह — प्रणतार्तिहरेति ॥ अनेन स्वस्य एवंविधावस्थाहेतुः अवतारविशेषोऽप्यनुसंहितः; उक्तं हि स्वयमेव — 'निरस्तेतरभोगाशो वरद शरणं गतः' इति। अत्र प्रणतशब्दः प्रकृतानुगुण्यात् 'प्रपन्नार्तिहरं विष्णुम्' इत्याद्यनुसाराच्च प्रकृष्टप्रह्वीभावयुक्तप्रपन्नविषयो वा। प्रस्तुतावतारे व्यक्ततमं स्वस्मिन्नुपकारतमं च वात्सल्यगुणं पूर्वं द्विरुक्तमपि 'मित्रभावेन सम्प्राप्तम्' 'दोषो यद्यपि तस्य स्यात्' इत्यादिस्मरणाय पुनराह — आश्रितेति ॥ वात्सल्यगुणोदधौ विग्रहादिकं निमग्नं भवतीत्यभिप्रायेण एकशब्दः। अत एव हि सर्वज्ञत्वादौ स्थितेऽपि अविज्ञातृत्वाद्युक्तिः। उपायान्तरं स्वीक्रियतामित्यत्र 'अस्मान्वेत्थ परान्वेत्थ' इति प्रकारेण मादृशानामकिंचनानामधिकर्तव्यं हिततमं त्वमेव जानासि, त्वदायत्तानुकूल्यस्य च शेषवृत्तिविधानेऽपि 'न त्वं सुप्तो न वा गतः' 'सर्वज्ञस्य ते' 'त्वयाऽपि लब्धं भगवन्निदानीम्' 'यदि मे न दयिष्यसे' इत्यादिकं न विज्ञापनीयमित्यभिप्रायेणाह — अनवरतेति ॥ अनवरतनिखिलशब्दाभ्यां ज्ञानस्य कालतो विषयतश्च संकोचो व्युदस्तः। 'त्वमेव कुरुष्व माम्' 'कुरुष्व मामनुचरम्' इत्यादिन्यायेन त्वदधीनव्यापारस्य मे त्वयैव प्रातिकूल्यनिवर्तनादिकमपि कार्यमित्याह — अशेषचराचरेति ॥ निखिलशब्दः स्वरूपस्थित्यादिनियन्तव्यकार्त्स्न्यपरः, सार्वकालिकनियमनकार्त्स्न्यपरो वा।

मूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषिभूत निखिलजगदाधार, अखिलजगत्स्वामिन्, अस्मत्स्वामिन्, सत्यकाम, सत्यसंकल्प, सकलेतरविलक्षण,

---

आगमैराचार्यादिभिरन्तरात्मतया च बहुप्रकार हि नियमनम् । न हि अविधेय ते किंचित्, येन मे अभिमत प्रतिबन्धादिलभ्येत, अलभ्य वा स्यात्, इति भाव: । परिपूर्णस्य मे त्वदङ्गीकारेण न किंचित्प्रयोजनमित्यत्राह— अशेषचिदचिदिति ॥ न हि मदेकवर्ज तव सर्वशेषित्वम्, अतो ममाप्यत्तिरक्षये तव चार्थ. प्रकल्पत इति भाव: । तथापि यथार्थस्थितरक्षापेक्षा तव नास्ति कथ च त्व रक्षणीय.[१] इति शङ्कायामाह— निखिलजगदाधारेति ॥ गुणादिवत् त्वदपृथक्सिद्धविशेषणस्य ममापेक्षामन्तरेणैव मत्सत्तादिक त्वयैव रक्ष्यते, तत्सापल्यार्थं रक्षापेक्षादिकमपि त्वयैव कारयितव्योऽहम्, न हि त्वदधीनसत्ताकस्य मे त्वन्निरपेक्षप्रवृत्तिः सभवतीत्यभिप्राय: । एवमेव हि शेषभूताना स्वतन्त्रस्वामिना त्वयैव यथेष्ट स्व मुद्दिश्य विनियोगः क्रियते इत्याह—अखिलजगत्स्वामिन्निति ॥ इष्टानिष्टप्रदानसाधारणेऽस्मिन् मद्विनियोगे किं तवायातमित्यत्राह— अस्मत्स्वामिन्निति ॥ मदाचार्यसन्ततिसामुख्येन ममैवविधत्वत्स्वरूपज्ञानादयस्याप्रदानरूपोपकारे प्रवृत्तेन त्वया शेषपूरण कार्यमिति भाव: । परिपूर्णतया पूर्वोपकारप्रत्युपकारनिरपेक्षस्य तव अकिंचननित्यसापेक्षसश्रितरक्षणमात्मीयनित्यगुणपरित्राणमिति सूचयति— सत्यकामेति ॥ सर्वशक्तेस्तव नित्यसूरिवर्गे मन्निवेशनमीषत्करम्, न हि त्वद्भूत केनापि हन्तु शक्यमित्याह— सत्यसकल्पेति ॥ तथाप्यपेक्षितार्थमन्यः कश्चिदाश्रीयतामित्यत्राह— सकलेतरविलक्षणेति ॥ 'विष्णुपोत विना नान्यत्किंचिदस्ति परायणम्'[१] 'भवता कथ्यते सत्य विष्णुरेकः परायणम्' इत्यादिभि: अन्येभ्यस्तव मोक्षप्रदत्वादिरूप विशेष पश्यन्नह मुमुक्षुः कमन्यमाश्रयेयम्; न हि परतन्त्रः कश्चित् स्वतन्त्रकृत्य प्रार्थनीय: ; न त्व परतन्त्र इति भाव. । यद्यर्थिन मा

**अर्थिकल्पक, आपत्सख, श्रीमन्, नारायण, अशरण्यशरण्य, अन-**

नाद्रियसे कथ तत्र औदार्यप्रथा जीवेदित्यभिप्रायेणाह— अर्थिकल्पकेति। अर्थी च कल्पकश्चेति विग्रहः। अर्थिनां कल्पद्रुम इति वा। उक्त हि— 'स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च' इति। अर्थिनः कल्पद्रुमा यस्य सः अर्थिकल्पक इति वा विवक्षितम्; यदगीयत— 'उदाराः सर्व एवैते' इति। अभिमतपुरुषार्थदानार्थमर्थिनामुत्पादकः शास्त्रादिमुखेनार्थित्वापादकश्चेति वा। एव पूर्वोक्तस्याप्यौदार्यस्य अतिशयप्रदर्शने तात्पर्यादपुनरुक्तिः। 'ज्ञात मया वसिष्ठेन' इत्यादिकमनुसदधानः पाञ्चालीगजेन्द्रादिवदापन्नस्यानन्यगतिकस्य मम एतामापदमवेक्ष्य रक्षितुमर्हसीत्याह— आपत्सखेति। आपदि सखिवत् सरक्षक इत्यर्थः। विश्वसनीयत्वस्नेहविषयत्वादिसूचनाय सखिशब्दः। शत्रुमपि 'तस्मात्परिश्रान्त इति व्यवस्य न त्वा शरैर्मृत्युवश नयामि' इत्यवोचत्॥

एव द्वाभ्यामिष्टप्रापकत्वम्, अनिष्टनिवर्तकत्व च दर्शितम्। अथ तत्र समानाभिप्रायतया नित्ययुक्तामखिलजगन्मातर पुरस्कुर्वतो मे महान्तोऽप्यपराधास्त्वया क्षन्तव्या इत्याह— श्रीमन्निति॥ सबन्धगुणविभूतिप्रयोजनव्यापारास्ते मदुपेक्षया मन्दफला मा भूवन्, अत आत्मान नातिवर्तेथा इत्याह— नारायणेति॥ उत्तरखण्डस्यापेक्षया पूर्वं श्रीमन्नित्याद्युक्तम्; इह तु पूर्वखण्डस्यापेक्षया उक्तैः स्वभावैः फलितमाह— अशरण्यशरण्येति॥ स्मर्यते हि— 'अगतीनां गतिर्भवान्' इति। अत एव अनालोचितेत्यादिना न पुनरुक्तिः, तत्र हि तारतम्यानादरे तात्पर्यम्। एतत्सर्वं व्याख्येयविवक्षितप्राप्यप्रापकाकारप्रपञ्चनम्। अस्म्यहमेवम्, एतावतापि कि त्वया लब्धम्, सर्वत्र हि शास्त्रार्थे अधिकारोऽपेक्षित इत्यत्राह— अनन्यशरण इति॥ तत्त्वविदोऽनन्यप्रयोजनस्य मम सिद्धोपायान्तर नास्ति, 'अहमस्म्यपराधानाम्' 'न धर्मनिष्ठोऽस्मि' इत्याद्युक्तावस्थाविशेषविदश्च मे साध्योपायान्तरमपि नास्तीति प्रतिबुद्धोऽस्मि; अयमेव हि

न्यशरण त्वत्पादारविन्दयुगल शरणमह प्रपद्ये ॥ अत्र द्वयम् ॥

पितर मातर दारान् पुत्रान्बन्धून्सखीन्गुरून् ।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥

---

ममात्राधिकार इति भाव । इद तु व्याख्येयस्योत्तमपुरुषाभिप्रेतमिति ज्ञापनाय, अहमपि न मम शरणमिति व्यञ्जनाय च, अधिकोऽहशब्द । अथवा अनन्यशरण इत्युपायान्तरशून्यत्वम्, अहमित्यपायभीरुत्वम्, अति शङ्काराहित्य, प्रयोजनान्तरतदुपायपरित्यागित्व, मोक्षार्थप्रपत्युन्मुखत्व च व्यज्यत । एतत्सूचित कार्पण्यविस्तर प्रतिवचनवाक्येषु गद्यान्तरयोश्च द्रष्टव्य । त्वदित्यादिना पूर्वखण्डपदक्रमानुसरणम् । त्वच्छब्द शरण्यत्वो पयुक्तसर्वाकारवैशिष्ट्यपर । पादेत्यादिक प्रागुक्तार्थम् । अत्र द्वयमित्यस्य व्याख्यानप्रायमिति शेष तात्पर्य तु पूर्वमवोचम् । यद्वा द्वयम्, अर्था नुसधानेन सह एवमुक्तमिति वा, वक्तव्यमिति वा विवक्षितम् । वाक्यान्तरै पुन पुन प्रपद्यत इति तु नाशङ्कनीयम्, एकसाध्यसिद्ध्यर्थं प्रपत्त्यावृत्ते प्रतिषेधात्, इह साध्यान्तरायोगाच्च । पितरमित्यादिक तु स्ववाक्यवर्त्तिव-धनसवादमुखेन अनन्यशरणत्वादिक विशदीकृत्य वक्ष्यमाण-[1]फलप्रार्थनाप्रस्तावनात्मकमिति द्वयार्थस्य समुदितोक्ति । तथा ह्यत्र सो पाधिकभोग्यतदुपायत्याग निरुपाधिकभोग्यतदुपायविशेषपरिग्रह च स्पष्ट यित्वा प्रसादय इत्यादिना सोढुमित्यन्तेनोत्तरखण्डस्य दोषनिवृत्तिप्रार्थना सगृह्यते । पित्रादीना त्यागोक्त्या भृत्यादिचेतनान्तरत्याग कैमुत्यसिद्ध । बन्धुशब्द इह सम्बन्ध्यादिपर । रत्नानीत्यादिकमुत्कटभोग्यत्वभोगसा धनत्वानामचेतनान्तराणामुपलक्षणम् । चकारेण वा अनुक्तसमुच्चय । प्रियेषु हितेषु च मोक्षतदुपायानुपयुक्तेषु कुत्रचित् सङ्गोऽपि न युक्त इति ज्ञापनाय पितरमित्यादिविविधोक्ति ॥ एव लोकसिद्धप्रियहितान्युदाहृत्य सर्वधर्मानित्यादिना शास्त्रवेद्यानि साधनानि साध्यानि चाह । तत्र सर्वधर्म

---

[1] फलप्रार्थनाप्रस्तावनात्मक

**परिपूर्णं भगवन्तं विशदतमानुभवेन निरन्तरमनुभूय, तदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिंकरो भवानि ॥**

---

तदेवमनुभाव्यानुभवितारावुक्तौ । अथानन्तरानुभवाद्युक्तमनुभवप्रकारमाह—**परिपूर्णमिति** ॥ अनन्तगुणविभूतिविशिष्टस्वरूपे अननुभूतांशरहितमित्यर्थः । भगवन्तं पराशरादिनिरुक्तप्रकारेणोभयलिङ्गम् । तस्मिन् सामान्यतः सर्वाकारविषयपरोक्षज्ञानात् परिमिताकारविषयप्रत्यक्षज्ञानाच्च व्यावृत्त्यर्थमाह—**विशदतमानुभवेनेति** ॥ तत्राप्यपरिच्छिन्नविषयसान्तरप्रत्यक्षाद्यवच्छिनत्ति—**निरन्तरमिति** ॥ अनुभवेन अनुभूय अनुभवेन विषयीकृत्येत्यर्थः । तदनुभवेत्यनेन पूर्वोक्तभगवदनुभवानुवादः, यद्वा, तच्छब्देन भगवदनुभवः परामृश्यते, तस्यानुभवोऽपि स्वयंप्रकाशस्य तस्यैव स्वरूपम्, ईदृशोऽयमनुभूयते मयेत्यनुवृत्तमभगवदनुभवस्वरूपोल्लेखादिना जनिता प्रीतिरिहोच्यते । तस्या अनवधिकातिशयत्वेन ऐश्वर्याद्यनुभवजनितप्रीतेर्व्यवच्छेदः । ईश्वरेच्छाधीनेऽपि कैंकर्ये स्वप्रीतिकारितत्वोक्तिः, नियोगनैरपेक्ष्यं प्रीतेः प्रेरकत्वातिशयं च व्यनक्ति । कारितशब्द इह शेषतायां वा, तदेकरतौ वा, शेषवृत्तिं प्रति प्रयोज्यकर्तरि किंकरे वा अन्वेतव्यः । अशेषावस्थाशब्देन सेव्यस्य भगवतः परत्वव्यूहत्वादयः, सेवकस्य च मुक्तस्य सदेहत्वविदेहत्वादिरूपा अवस्था सर्वा विवक्षिता । शेषतात्र शेषवृत्तिः । अभिमतसर्वशेषवृत्तिषु अप्रतिघातमभिप्रेत्य अशेषशब्दः, स्वामिप्रीत्यर्थत्वाविशेषेण परस्परैकरस्यात्परकृतापि शेषवृत्तिः स्वकृतेव भवतीति भावः । ईश्वरस्य मुक्तस्य च स्वच्छन्दानेकदेहपरिग्रहेण वा अनन्तगरुडादिवृत्तिसजातीयकैंकर्यसिद्धिः । आत्मा आत्मीयं वा सर्वमशेषशब्देनोच्यते, तदा तस्य शेषता शेषमात्र एव । एवंविधायामशेषशेषतायामेव रतिः प्रीतिरिच्छा वा रूपं निरूपकधर्मो यस्य सः अशेषशेषतैकरतिरूपः । नित्यकिंकरो भवानि उत्तरावधिरहितकैंकर्यसाम्राज्यवान् भवेयमिति भावः ॥

स्वात्मनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावानुसंधानपूर्वकभगवदनवधिकातिशयस्वाम्याद्यखिलगुणगणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैंकर्यप्राप्त्युपायभूतभक्तितदुपायसम्यग्ज्ञानतदुपायसमीचीनक्रियातदनुगुणसात्त्विकतास्तिक्यादिसमस्तात्मगुणविहीनः। दुरुत्तरानन्ततद्विपर्य-

---

एवं न्यासोपासनसाधारणाधिकारसिद्ध्यै प्रथमं फल्पर उत्तरखण्डो विहृतः। अथोपायपरं पूर्वखण्डं विवृण्वन्, तत्रोत्तमपुरुषविवक्षितमाकिंचन्यरूपं प्रपत्तेर्विशेषाधिकारं कार्पण्यरूपमङ्गं च व्यनक्ति— स्वात्मनित्यनियाम्येति॥ स्वात्मशब्दोऽनुसंधातृस्वरूपपरः। अत्र शेषशेषितत्कैंकर्यचिन्तनरसेन तदनुवृत्तिवाञ्छया च पूर्वोक्तस्यैव परमपुरुषार्थस्य विस्तरेणानुवादः। नियाम्यशब्दोऽत्र भावप्रधानः। अनवधिकातिशयस्वाम्यम् अनवच्छिन्नसर्वविषयशामित्वम्। आदिशब्देन तथाविधनियन्तृत्वादिसंग्रहः। ऐश्वर्यादिफलान्तरात् कादाचित्कभगवत्कैंकर्याच्च व्यावृत्त्यर्थं नित्यकैंकर्यशब्दौ। उपायभूतेति च्विप्रत्ययरहितप्रयोगेण मोक्षप्रदत्वं भगवद्भक्तेः स्वभावप्राप्तमिति व्यज्यते। भक्तिशब्द इह वेदान्तोदितसपरिकरभक्तियोगपरः। ज्ञानक्रियाशब्दाभ्यां ज्ञानकर्मयोगौ विवक्षितौ; तयोः सम्यक्त्वं यथार्थत्वं स्वतत्फलाङ्गोपसंहारवत्त्वम्। ज्ञानयोगमन्तरेणापि कर्मयोगेनैवात्मावलोकनपूर्वकभक्तियोगाधिकारारोहणस्य भगवद्गीताभाष्यप्रपञ्चितत्वाधिकारिविशेषनियततया तदनादरेणात्र स्वारसिकक्रमनिर्देशः। सात्त्विकता 'नित्यसत्त्वस्थः' इत्युक्तसत्त्वनिष्ठता; तस्याः फलम् आस्तिक्यादिगुणजातम्, अवस्थाभेदेन तस्या हेतुश्च। 'अमानित्वमदम्भित्वम्' 'दया सर्वेषु भूतेषु' इत्याद्युक्तात्मगुणान्तरसंग्रहाय समस्तशब्दः। प्रपत्त्यपेक्षितज्ञानविश्वासादेरित्यह न प्रतिषेधः॥

एवमुपायान्तरतदुपायपरंपराहानिरुक्ता। अथ पूर्वं पश्चाच्चोपायप्रतिबन्धकपापपरंपरान्वयमाह— दुरुत्तरेति॥ दुरुत्तरत्वं भगवत्प्रकल्पमन्त

शक्यविस्रंसनकर्मपाशप्रग्रथितः, अनागतानन्तकालसमीक्षयाप्यदृष्टसंतारोपायः, निखिलजन्तुजातशरण्य, श्रीमन्नारायण, तव चरणा-

---

अत्र अविद्याशब्देन अज्ञानं देहात्मभ्रमादिकं च गृह्यते, तस्याश्च कर्महेतुत्वं रागद्वेषद्वारा । 'यद्ब्रह्मकल्प—' इत्याद्युक्तप्रक्रियया अनाद्यविद्यासंचितत्वेनानन्तत्वात् प्रत्येकं प्राबल्याच्च भगवद्व्यतिरिक्तैरशक्यविस्रंसनत्वम् । 'पशवः पाशिताः पूर्वं परमेण स्वलीलया । तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ॥' इत्याद्युक्तसूचनाय कर्मणः पाशत्वरूपणम् । प्रग्रथितः दृढं निबद्धः; 'नाभुक्तं क्षीयते कर्म' इति हि स्मर्यते । उक्तप्रतिबन्धकभूयस्त्वात् 'त्वत्पादकमलादन्यत्' इत्याद्युक्तप्रकारेण कालान्तरेऽप्युपायान्तरसंभावनां प्रावृन्न्यायेन प्रतिषेधति– अनागतेति ॥ वक्ष्यमाणश्रीमन्नारायणनाम्ना फलितम् 'सर्वस्य शरणं सुहृत्' 'देवानां दानवानां च' 'सर्वलोकशरण्याय' 'विभीषणो वा सुग्रीव यदि वा रावणः स्वयम्' इत्यादिप्रसिद्धं सर्वसंग्रहोपयुक्तं स्वभावमाह–निखिलजन्तुजातशरण्येति ॥ हिरण्यगर्भादीनामपि संग्रहाय निखिलशब्दः, तेऽपि हि कर्माधीनजन्मभागितया जन्तवः । 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥ एतान्निरस्य मर्त्येषु मुनिरंकाश्रिता यदा । तत्सन्निधिं एवापि मुक्तिमेष्यन्ति वै ध्रुवम् ॥' इत्याद्यर्थमभिप्रेत्य जातशब्दः । स चात्र गुणप्रधानतया अन्वितमात्रपरः । पूर्वैकवाक्यपदमभानुसारेण श्रीमदित्यादीनि पदानि । श्रीशब्देन 'त्वया सह दुर्गेशः' इत्याद्युक्तं सूच्यते । सर्वशरण्यत्वौपयिकसमस्तगुणविशेषादिप्रदर्शनाय नारायणशब्दः । कृपोत्तम्भकत्वातिशयादीनित्याय चरणग्रहणम् । उपायदशायामपि भोग्यत्वसूचनाय अरविन्दत्वरूपणम् । शरणशब्द उपायपरः । अहंशब्दः; अधिकारविषयादुत्तमपुरुषनिर्दिष्टाधिकारिविशेषप्रकाशनाय अहंशब्दः; अधिकारविशेषादु पायान्तरेषु निरतः, प्रलयभयादिदर्शनादुपायेभ्य उपरतः, तत्संग्राहक विवेकादिसाहाय्यविमुखः, सर्वत्र दोषदर्शनादित्यनन्यप्रयोजनान्तरानुसारः,

रविन्दयुगलं शरणमहं प्रपद्ये ॥

एवमवस्थितस्याप्यर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभवप्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्यदास्यं

---

परमपुरुषार्थसङ्कल्पप्रार्थनान्वितभरन्यासोऽयतश्चेति भावः । शरणं प्रपद्ये उपायतया आश्रयामि । अकिंचनोऽनन्यगतिरहं श्रीमति नारायणे स्वात्मरक्षाभरं निक्षिपामीत्युक्तं भवति । अत्र सविशेषणनारायणशब्देन निरोधिभूयस्त्वप्राप्यगौरवोपायलाघवादिमूलशङ्कानिरासहेतवः शरण्याकारा विवक्षिताः ॥

अथ तत्फलित सोपसर्गधातूक्तम् 'रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम् । गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् ॥' इति विभज्य निर्दिष्टमङ्गद्वयम् 'प्रार्थनामात्रसन्तुष्टो जन्तोर्यच्छति वाञ्छितम् । इति निखिलभगवत्प्रार्थना शरणागतिः ॥' इत्युक्तप्रकारविशेषोपलक्षितप्रकारिवैशिष्ट्याभिप्रायेणाह—एवमिति ॥ एवमवस्थितस्येत्यनेन अधिकारवैगुण्य विरोधिभूयस्त्वं च पूर्ववाक्योक्तमेव शरण्यगुणप्रकर्षव्यञ्जनायानूदितम् । अर्थित्वमात्रेणेति उपायलाघवोक्तिः; अहृदयप्रार्थनावाक्यमात्रमपि 'नेहाभिक्रमनाशोऽस्ति' इति न्यायात् अन्ततः कार्यकरमिति भावः । अथ वा, अत्र सकृत्कर्तव्यभरन्यासलक्षणतया सद्यः स्वाभीष्टसिद्धिः । स्वानुभवप्रीत्येत्यादिना प्राप्यगौरवप्रकाशनम् । उक्तैर्हेतुभिः सम्भवन्तीं शङ्कामपाकर्तुं परमकारुणिको भगवानिति सुलभत्वपरत्वसूचकपदद्वयोक्तिः; ईश्वरस्य हि सर्वविरोधिनिवर्तनार्हता, असमर्थस्य निर्दयत्वे दयालोश्चासमर्थत्वे शरण्यत्वं न स्यादिति तत्सिद्ध्यर्थमुभयोक्तिः । स्वानुभवेत्यत्र स्वशब्दः परमात्मविषयः । ऐकान्तिकत्वम् अनन्यविषयत्वम् । आत्यन्तिकत्वमिह फलान्तरोपाधिकानिवृत्तिरहितत्वम्, अत एव पश्चाद्यावत्कालमनुवर्तमानत्वं वा । दास्यकिंकरताशब्दाविह वृत्तिपरौ । रतिशब्देन विश्वासस्य महत्त्वरूपप्रकारोऽभिप्रेतः प्रार्थ-

दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये ॥

तवानुभूतिसंभूतप्रीतिकारितदासताम् ।
देहि मे कृपया नाथ न जाने गतिमन्यथा ॥

सर्वावस्थोचिताशेषशेषतैकरतिस्तव ।
भवेयं पुण्डरीकाक्ष त्वमेवैवं कुरुष्व माम् ॥

---

नाथशब्दस्य इच्छामात्रेऽपि प्रयोगसम्भवात् तद्व्यावृत्त्यर्थम् 'तदेकोपायता याच्ञा' इत्युक्तयाचनरूपत्वं व्यञ्जयितुं द्विकर्मकप्रयोगः । सर्वस्य प्रार्थितप्रदानसामर्थ्यम्, कैङ्कर्यप्रतिसम्बन्धिनस्तस्योभयलिङ्गत्वं च ज्ञापयितुम्— भगवन्तमित्युक्तम् । अस्मिन् वाक्ये प्रातिकूल्यवर्जनस्य च आनुकूल्यसङ्कल्पस्य चार्थसिद्धत्वमवगन्तव्यम् ॥

उक्तप्रकारसाध्यसाधनरूपमर्थद्वयं व्याख्येयक्रमेण सुखप्रतिपत्त्यर्थमैतिहासिकश्लोकद्वयेन स्ववाक्यायमानेन सङ्क्षिप्याह— तवेति ॥ यद्यपि प्रथमश्लोकेऽपि पूर्वार्धे फलमुपादीयते, तथाप्यसौ देहीत्युक्तप्रार्थनाप्राधान्यादुपायपरः । अत्र दासताशब्देन दासवृत्तिर्विवक्षिता, दासभावमात्रस्य च नित्यसिद्धत्वेन साध्यत्वायोगात् । मे अनन्यप्रयोजनस्य अनन्योपायस्य च । कृपया नाथेति पदाभ्यां गुणविशेषसम्बन्धविशेषविशिष्टस्योपायभाव इति व्यज्यते; नाथशब्दो हि नाथ्यत इति व्युत्पत्त्या रक्षणार्थं प्रार्थनीये स्वामिनि रूढः । न जाने गतिमन्यथा उक्तप्रकारात्प्रपत्तिसमाश्रयणीकारात् त्वत्तोऽन्यथाभूतं मदर्हमुपायं सर्वशास्त्रपरामर्शेऽपि न पश्यामि, देवतान्तराणां साक्षान्मोक्षप्रदत्वाभावात्, मोक्षोपायतया चोदितस्य तदुपासनस्य मया दुःसाधत्वादिति भावः । यद्वा अन्यथेत्यनेन त्वत्प्रदानवर्जितमिति विवक्षितम् ॥

एवं प्रार्थिते कैङ्कर्यरूपे पुरुषार्थे प्रीतिशब्दोक्तहेतुत्वं विशिष्य, स्वाभीष्टप्रदाने स्वप्रयत्नान्तरनैरपेक्ष्यं चापेक्षते— सर्वेति ॥ सर्वावस्था-देशगताशब्दौ पूर्वोक्तार्थौ । भगवद्दायां स्वाम्यभिमतप्रकार उचितशब्दः ।

एवम्भूततत्त्वयाथात्म्यावबोधतदिच्छारहितस्याप्येतदुच्चारण मात्रावलम्बनेनोच्यमानार्थपरमार्थनिष्ठं मे मनस्त्वमेवाद्यैव कारय ॥

---

'जायमानं हि पुरुषम्' 'कृपामयमपाङ्गं ते मय्यपि निपातय' इत्या युक्तेन सत्त्वोन्मेषहेतुना कटाक्षविशेषेण मामेव कुरुष्वेत्यभिप्रायेणोक्तम्— पुण्डरीकाक्षेति ॥ यद्वा 'पुण्डरीकं परं धाम' इत्यादिनिरुक्तेनानेन नाम्ना परमपदवासिनं परिचरणं प्रार्थ्यत इति सूच्यते । त्वदितरावाक्ये ऽस्मिन्नर्थे त्वयि च निरपेक्षोपाये किमीदृशमस्यासरूपस्याप्यातिरिक्तमत्रय क्षेनेत्यभिप्रायेणाह— त्वमेवेति ॥ न मर्त्यम मत्स्यान्ति परमकारुणिक ! माम् आकिञ्चन्यानन्यगतित्वार्थित्वशालिनम् । नितोर्थाल्योरिह देहि कुरु ष्वेति परस्मैपदात्मनेपदाभ्यां स्वस्य भगवतश्च यथार्हं क्रियाफलान्वय सूच्यते ॥

ननिवह शरण्यशरणागतितत्फलविशेषनिर्धारणपूर्विका फलकामना हि अधिकारिविशेषणम्, न पुनस्तद्वत इव तथाविधतद्वचनमात्रमित्यत 'अनि च्छन्नप्येवम्' इति श्लाघोक्तिप्रकारेण सप्रश्रय प्रतिवक्ति— एवंभूतेति ॥ तदिच्छेति इच्छाविषयत्वेन परामृश्यमानार्थत्वात् तत्त्वशब्द इह पुरुषार्थपर, पुरुषार्थविशेषनिष्कर्षाय जीवात्मपरमात्मतत्त्वपरो वा । अतोऽर्थेच्छा या त दिच्छेत्युच्यते, तदा पुरुषार्थेच्छाविरह कैमुत्यात्सिध्यति । श्रिय पतेस्तव प्रसादादद्य साधिकारोऽस्मि, निरधिकारत्वेऽपि लब्धव्याजेन त्वया दोषपू रण कार्यमिति द्योतयितुम् अपिशब्द । एवमधिकारवैकल्यमङ्गवैकल्यमङ्गि वैकल्य चान्वाहरोक्तम्— उच्चारणमात्रेति । वैयर्थ्यदोषप्रसङ्गपरिहारहेतु स्तव सिद्ध इत्यभिप्रायेण अवलम्बनशब्द । उच्यमानार्थ उपायोपेयपर । एतच्छन्दोऽप्यत्र तद्विषय । अन्यतरविषयत्वेऽपि तदितरस्यार्थात्सिद्धि । परमार्थनिष्ठत्वम् अज्ञानसंशयविपर्ययरहिताध्यवसायानुवृत्तिमत्त्वम् । मे 'सकृ दुच्चारो भवति' 'सकृदुच्चारितं येन' 'मम शरणमितीरयन्ति ये' इत्या द्युक्तवचनमात्रधनस्य त्वदायत्तसर्वसिद्धे । मन 'चञ्चलं हि मन कृष्ण'

अपारकरुणाम्बुधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकमहोदधे, अनवरतविदितनिखिलभूतजा-

---

'मनो दुर्निग्रहं चलम्' 'बन्धाय विषयासङ्गि' इत्याद्युक्तदोषमपि कृपाक्षेपेण त्वया अनुगृहीतानां सम्यग्ज्ञानसाधनम्। शरण्यस्यापेक्षणीयान्तराभावम्, आत्मनस्त्वरातिशयं च ध्वनयति— त्वमेवाद्येति ॥ कारयेत्यनेन प्रपत्तावपि स्वस्य प्रयोज्यकर्तृत्वम्, अध्यात्मशास्त्रैराचार्यमुखेनान्तर्यामितया च भगवतः प्रयोजककर्तृत्वं च प्रकाश्यते। अधिकृतप्रपत्तिप्रयोगस्यापि भाष्यकारस्येदं वाक्यं विकल्पप्रयोगाणामन्येषामपि शरण्यानुकम्पया क्षिप्रमुपायपूर्तिः स्यादिति ख्यापनार्थम् ॥

अथाधिकारोपायफलप्रदानेषु यथार्हमुपयुक्तान् भगवतः प्रकारान् वदन्, प्रथमं सर्वोपयोगिगुणविशेषप्रकर्षमाह— अपारेति ॥ एवंविधमपि व्याप्तिमभिप्रेत्य अपारशब्दोक्तिः, तत्फलितं स्वेनाश्रयणीयत्वमभिप्रेत्याह— अनालोचितेति ॥ जातिगुणादिनिकर्षानादरेण सर्वैः शरण्यतया वरणीय इत्यर्थः। अनेन प्रपत्तेः सर्वाधिकारत्वं दर्शितम्। कारुणिकोऽपि यदि विषमः स्यात्, समोऽपि यदि निर्घृणः स्यात्, न तदा सर्वशरण्यः स्यादिति तदर्थमुभयोक्तिः। शरणागतिसमनन्तरलक्षणीयौ गुणावाह— प्रणतार्तिहर आश्रितवात्सल्यैकमहोदधे इति ॥ प्रणता इव प्रह्वीभावयुक्ताः प्रपन्नाः, तेषां तत्तदभिमतालाभनिमित्तामार्तिं हरतीति प्रणतार्तिहरः। अनेन तु प्रपत्तेः सकृत्फलप्रदत्वं च सूच्यते। प्रणतस्य प्रह्वमानसत्वे तदार्तिहरणादल्पप्रपत्तिमात्रत्वं प्रकाश्यते। वात्सल्येन गुणान्तरतिरस्कारमभिप्रेत्य एकशब्दः, येन सर्वेशोऽप्याश्रितैः रक्षनन्योऽपरतन्त्र इव स्यात्। वात्सल्यादिसद्भावेऽप्यशक्त्यापूर्णस्याशक्तस्य च निरपेक्षरक्षकत्वं न स्यात्, अतस्तत्सिद्ध्यर्थं गुणद्वयम् अनवरतेत्यादिभिरुच्यते। अनवरतनिखिलशब्दाभ्यां ज्ञानस्य कालतो विषयतश्च निःसङ्कोच उक्तः, सर्व अनिष्टनिवर्तनेष्टप्रापणोपायोगिष्वधिकारेषु किञ्चिदपि कदा

**तयाथात्म्य, सत्यकाम, सत्यसंकल्प, आपत्सख, काकुत्स्थ, श्रीमन्, नारायण, पुरुषोत्तम, श्रीरङ्गनाथ,**

---

च्चिदपि तयाजात नास्तीति भाव । न च तव मादृशाकिंचनपरित्यागहेतुभूतप्रत्युपकारपूर्वोपकारादिप्रयोजनान्तरमापेक्ष्यं गुणवैकल्यं वा कदाचिदप्यस्ति, भतो मद्रक्षणेन स्वगुणान् भरक्षेरयमिप्रायेणाह—सत्यकामेति ॥ नित्यमोग्यानन्तकल्याणगुणादिविशिष्टेत्यर्थ । मत्स्वमात्रसाधितजगत्सृष्ट्यादेरतव मद्रक्षणेऽपि न हि सत्त्वादतिरिक्त सपादनीयमित्यभिप्रायेणाह—सत्यसकल्पेति ॥ अमोघसकल्पेत्यर्थ , त्वयैव स्थापित प्रपन्नविषय स्वव्रत न कैश्चिदपि प्रतिहन्तु शक्यमिति भाव । उक्तगुणगर्भहेतुकद्रौपदीगजेन्द्रादिसरक्षणप्रकार तदुत्तवस्याप्यापत्सखमनायाद्वाहति—आपत्सखेति ॥ आपदि सखा भवतीत्यापत्सख , सखेव प्रातिविश्रामगोचर सरक्षक इति भाव । तदेतत् निषादवानरराक्षसमर्वजातिसुलभे सकृत्प्रपन्नसरक्षणव्रतिनि सर्वलोकशरण्ये विषयवासमावसरक्षितजङ्गमस्थावरजन्तुजाते अवतारविशेषे मुव्यक्तमित्यभिप्रायेणाह—काकुत्स्थेति ॥ अनेन 'वधार्हमपि काकुत्स्थ कृपया पर्यपालयत्' इत्यादिवाक्यमपि स्मार्यते । अस्य सापराधेष्वप्याश्रितेषु निग्रहोन्मत्तानिवारिकया सद्धर्मचारिण्या नित्ययोगमाह—श्रीमन्निति ॥ पराहितेष्वपि स्वार्थप्रवृत्त्यनुगुणसम्बन्धादिविशेष व्यनक्ति—नारायणेति ॥ इद च पदद्वय व्याख्येयगतोपायसिद्धोपायोपेयप्रकाशकम् । नारायणशब्दवाच्यजगत्सम्बन्धादिशङ्कितदोषनिवृत्त्यर्थं पञ्चदशाध्यायोक्त काष्ठाप्राप्त परत्वरूप वैलक्षण्य समाख्याति—पुरुषोत्तमेति ॥ पुरु सनोतीति पुरुषशब्दव्युत्पत्त्या बहुप्रदेतृत्वमत्व वा विवक्षितम्—स्वाश्रितेभ्य स्वात्मानमपि सन्निभूतिक ददातीति सर्वापेक्षितमाधकमेवानुगुणा सौलभ्यकाष्ठा सूचयति—श्रीरङ्गनाथेति ॥ उक्त चार्चावतार प्रस्तुत्य भगवता शौनकेन—'तामर्चयेत् प्रणमेत्ता यजेत्ता विचिन्तयेत् । विन्यस्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥' इति । श्रीगीतापरे तु अर्चावतारस्योपायविरोधिदर्शनस्तंकत्वमपि दर्शितम् ।

मम नाथ, नमोऽस्तु ते ॥

इति श्रीभगवद्रामानुजविरचिते गद्यत्रये

**श्रीरङ्गगद्याख्यं मितगद्यम् ॥**

---

'मद्दर्शनादकस्माच्च पुंसां समुदचेतसाम् । कुवासना कुबुद्धिश्च कुतर्कश्च दुर्निश्चयः ॥ दुर्हेतुश्च कुभावश्च नास्तिक्यं लयं व्रजेत् ।' इति । अत्र विशेषोऽप्यत्र सेवकानां सत्त्वोन्मेषहेतुत्वाभिप्रायेणोपात्तः, स्वयमुत्सवैकदेशे ण्यवरूपभगवत्क्षेत्रवासिनामपि फलविशेषः प्रदर्शितः श्रीपाद्मे— 'दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कलुषीकृतम् । तदन्तकाले सद्बुद्धिं याति नारायणालये ॥' इति । तत्रापि स्वाचार्यपरम्पराचिरसेवनजनितप्रसादातिशयात् स्वदोषानादरेण स्वस्यैवंविधावस्थाप्रदर्शनेन प्रार्थितपूरणानुगुणतामभिप्रेत्याह— मम नाथेति ॥ स्वापेक्षितसिद्ध्यर्थं याचनीयः स्वामी नाथः । एवमभिमुखीकृते भगवति प्रकृतोपायस्य प्रपत्त्यात्मरूपं प्रधानांशं दमयन्त्यादिवृत्तान्तेषु शरणागतिविषयतया प्रसिद्धेन भगवच्छास्त्रोक्तस्थूलसूक्ष्मादियाजनरता नमःशब्देन निगमयन्, प्रयुज्यमानः सोऽयमुपायस्त्वच्छेषतयैव स्वीक्रियतामित्यभिप्रायेणाह— नमोऽस्तु ते इति ॥ यद्वा अत्र परत्र चापेक्षितं निर्ममत्वसत्कृतं कैङ्कर्यं नमःशब्दाभिप्रेतम् । अस्त्विति आशासनम् । ते इत्यत्र प्रकृत्यंशेन प्राप्यत्वप्रापकत्वशेषित्वादिशालितया निरुपाधिकनमःप्रयोगयोग्यत्वमभिप्रेतम्, चतुर्थी चात्र तादर्थ्यपरा । इदमेव वाक्यमावर्त्यमानं पृथुगद्योक्तस्य प्रतिवचनस्य समाहोऽपि भवति, पृथादिविषय प्रयोजनप्रकर्षे सत्यावृत्तेरभियुक्तसम्मतत्वात् । तथायमर्थः— मदाश्रयस्य ते यथामनोरथं महैश्वर्यं भवत्विति । तदेव वहन्यत्रयोच्चारणशरणागतितत्फलविशेषा प्रदर्शिता ॥

यदत्र संग्रहेणोक्तमनुक्तमपि किंचन । बृहद्गद्याधिकारे तदत्र प्रत्यवमृश्यताम् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु रहस्यरक्षायां
मितगद्याधिकारः द्वितीयः ॥

॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

# ॥ श्रीवैकुण्ठगद्यम् ॥



यामुनार्यसुधाम्भोधिमवगाह्य यथामति ।
आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्, क्लेशकर्माद्यशेषदोषासंस्पृष्टम्, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसङ्ख्येयकल्याणगुणगणौघमहार्णवम्, परमपुरुषम्, भगवन्तं श्रीमन्नारायणं स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य, ऐकान्तिकात्यन्तिकतत्पादाम्बुजद्वयपरिचर्यैकमनोरथः, तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः, तस्यैव भगवतो नारायणस्य अखिलस-

---

॥ श्रीः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।

अनया गद्यद्वयोक्तगमनिकयैव श्रीवैकुण्ठगद्यमपि गतार्थप्रायम् । एतयोः स्वानुष्ठानोक्तिमुखेन शिष्यशिक्षणं कृतम्; तस्मिंस्तु उपदेशमुखेनेति विशेषः । तत्र यदादौ पठ्यते —'यामुनार्यमहाम्भोधिमवगाह्य यथामति । आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥' इति, इहासौ भक्तियोगशब्दः स्वयंप्रयोजनभगवदनुसन्धानपरः; अन्यथा 'तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः' इति

रवद्यैकसागरस्य अनालोचितगुणगणाखण्डजनानुकूलामर्यादशील वत, स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य, आश्रितवात्सल्यैकजलधे , भक्तजनसंश्लेषैक भोगस्य, नित्यज्ञानक्रियैश्वर्यभोगसामग्रीसमृद्धस्य महाविभूते श्रीमच्चरणारविन्दयुगलमनन्यात्मसञ्जीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ॥

ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत्— चतुर्दशभुवनात्मकम् अण्डं दशगुणितोत्तर चावरणसप्तकं समस्तं कार्यकारणजातमतीत्य, परमव्योमशब्दाभिधेये, ब्रह्मादीनां वाङ्मनसागोचरे, श्रीमति वैकुण्ठे दिव्यलोके, सनकविधिशिवादिभिरप्यचिन्त्यस्वभावैश्वर्यैर्नित्यसिद्धैरनन्तैर्भगवदानुकूल्यैकभोगैर्दिव्यपुरुषैर्महात्मभिरापूरिते, तेषामपि इयत्परिमाणम् इयदैश्वर्यम् ईदृशस्वभावमिति परिच्छेत्तुमयोग्ये, दिव्यावरणशतसहस्रावृते, दिव्यकल्पतरूपशोभिते, दिव्योद्यानशतसहस्रकोटिभिरावृते, अतिप्रमाणे दिव्यायतने, कस्मिंश्चिद्विचित्रदिव्यरत्नमये दिव्यास्थानमण्डपे, दिव्यरत्न-

वक्ष्यमाणविरोधात् । अत एव 'प्रत्यहमात्मोज्जीवनाय' इत्यादिकमपि न भक्तितत्साधनपरम्, अपि तु 'ज्ञानी तु परमैकान्ती तदायत्तात्मजीवन' इत्यादिप्रसिद्धे अवस्थाविशेष महदापधिकपानीयन्यायेन अलभ्यमा भाश्वासनाभिप्रायम् ॥

तेषामपीयत्परिमाणमियदैश्वर्यमीदृशस्वभावमिति परिच्छेत्तुमयोग्ये इति दिव्यायतनविशेषण तु महत्तरत्वमेव विवक्षितम्, दिव्यावरणशतसहस्रादिकथनेन तत्परिमाणमिद । अथ सभा... निरतिशयभोग्यत्वादिरुच्यते । न ह्यधिकार्येषु पार...

स्तम्भशतसहस्रकोटिभिरुपशोभिते, दिव्यनानारत्नकृतस्थलविचित्रिते, दिव्यालंकारालङ्कृते, परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैर्दिव्यपुष्पैः शोभमानैर्दिव्यपुष्पोपवनैरुपशोभिते, सङ्कीर्णपारिजातादिकल्पद्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चिदन्तःस्थपुष्परत्नादिनिर्मितदिव्यलीलामण्डपशतसहस्रोपशोभितैः सर्वदा अनुभूयमानैरप्यपूर्ववदाश्चर्यमुपजनयद्भिः क्रीडाशैलशतसहस्रैरलंकृतैः कैश्चिन्नारायणदिव्यलीलाऽसाधारणैः कैश्चित्पद्मवनालयादिव्यलीलाऽसाधारणैः साधारणैश्च कैश्चित् शुकशारिकामयूरकोकिलादिभिः कोमलकूजितैराकुलैर्दिव्योद्यानशतसहस्रैरावृते, मणिमुक्ताप्रवालकृतसोपानैर्दिव्यामलामृतरसोदकैर्दिव्याण्डजवरैरतिरमणीयदर्शनैरतिमनोहरमधुरस्वरैराकुलैरन्तःस्थमुक्तामयदिव्यक्रीडास्थानोपशोभितैर्दिव्यसौगन्धिकवापीशतसहस्रैः दिव्यराजहंसावलीविराजितैरावृते, निरस्तातिशयानन्दैकरसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैर्विराजिते, तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते, नानापुष्पासवास्वादमत्तभृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते, चन्दनागरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने, मध्ये दिव्यपुष्पसंचयविचित्रिते महति दिव्ययोगपर्यङ्के अनन्तभोगिनि, श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादिकं सर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनम्,

---

रीणां सार्वज्ञ्यहानिः, दिव्यायतनगुणप्रकर्षे तात्पर्याच्च। प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैः इत्यत्रापि हर्षप्रकर्षजनकत्वे तात्पर्यम्। श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकम् इत्यत्र तु वैकुण्ठशब्देन नगराद्यवान्तरप्रदेशो विवक्षितः, स

स्वच्छन्दनीलजीमूतसङ्काशम्, अत्युज्ज्वलपीतवाससम्, स्वया प्रभया अतिनिर्मलया अतिशीतलया अतिकोमलया स्वच्छमाणिक्याभया कृत्स्नं जगद्भासयन्तम्, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतसागरम्, अतिसौकुमार्यादीषत्प्रस्विन्नवदलक्ष्यमाणललाटफलकदिव्यालकावलीविराजितम्, प्रबुद्धमुग्धाम्बुजचारुलोचनम्, सविभ्रमभ्रूलतम्, उज्ज्वलाधरम्, शुचिस्मितम्, कोमलगण्डम्, उन्नसम्, उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिश्चतुर्भिराजानुविलम्बिभिर्भुजैर्विराजितम्, अतिकोमलदिव्यरेखालङ्कृताताम्रकरतलम्, दिव्याङ्गुलीयकविराजितम्, अतिकोमलदिव्यनखावलीविराजितातिरक्ताङ्गुलीभिरलङ्कृतम्, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगलम्, अतिमनोहरकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुरादिभिरत्यन्तसुखस्पर्शैर्दिव्यगन्धैर्भूषणैर्भूषितम्, श्रीमत्या वैजयन्त्या वनमालया विराजितम्, शङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैः सेव्यमानम्, स्वसङ्कल्पमात्रावकॢप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्, वैनतेयादिभिः स्वभावतो निरस्तसमस्तसांसा-

एव प्रशस्तविभूतिमत्त्वादैश्वर्यशब्दोपचारणे । नित्यनुरिति देवा आनायने पविनश्वरविशेषणस्योपादानमात्रम्, तेन गर्भमेन अनांरा दनलनेप्यस्य । पुण्डरीकसदृशचरणयुगलम् इत्यत्र पुण्डरीकशब्दः पमगमान्वनुयेन रक्ताम्बुजपरः, तत्राप्यम् — संकल्पमात्रावकॢप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्

रिकल्पभावैर्भगवत्परिचर्याकरणयोग्यैर्भगवत्परिचर्यैकभोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानम्, आत्मभोगेनाननुसंहितपरादिकालम्, दिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तम्, ईषदुन्मीलितमुखाम्बुजोदरविनिर्गतेन दिव्याननारविन्दशोभाजननेन दिव्यगाम्भीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिकगुणगणविभूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिलजनहृदयान्तराण्यापूरयन्तं भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा, ततो भगवतो नित्यस्वाम्यम् आत्मनो नित्यदास्यं च यथावस्थितमनुसंधाय, 'कदाहं भगवन्तं नारायणं मम कुलनाथं [1]मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा? कदा वा भगवत्पादाम्बुजद्वयं शिरसा संग्रहीष्यामि? कदाहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तस-

इति, तत्र यद्यपि जगद्व्यापारमोक्षप्रदत्वं ब्रह्मलक्षणतया मुक्तेष्विव नित्येष्वपि सर्वेषु न सम्भवति यद्यपि च भगवान् स्वतः सर्वेशः, तथापि 'प्रियेण सेनापतिना न्यवेदितं तथानुजानन्तमुदारवीक्षणैः' इति न्यायेन भगवद्दत्तताद्दृशाधिकारतया तत्तदवसरे जगत्सृष्ट्याद्यर्थं भगवतः विज्ञापनवाक्यं विष्वक्सेनो व्याहरति तदा स्वतः सर्वज्ञो भगवान् तन्निवेदितकार्यं काङ्क्षति, तावन्मात्रेण विष्वक्सेनस्य जगद्व्यापारव्यपदेशरूपस्तुतिः, न्यस्तसमस्तात्मैश्वर्यम् इत्येतदपि सेनान्यवग्रहणाद्यर्थाधिकारप्रदानपरम्, 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिन्यायेन परिमितविषयो वाव जगच्छब्दः अतो हिरण्यगर्भादिवत् क्वाचित्कप्रभूतसृष्ट्यादिभावाच्चास्मिन् ब्रह्मलक्षणप्रसङ्गः। यदपि आत्मभोगेनाननुसंहितपरादिकालम् इति, तदपि भगवतः कालविषयमज्ञानं ना

1 मम कुलदैवतं मम सर्वस्वं साक्षात्करवाणि।

मस्त्वेतरभोगाशोऽपगतसमस्तसांसारिकस्वभावस्तत्पादाम्बुजद्वयं प्रवेक्ष्यामि ! कदाहं भगवत्पादाम्बुजद्वयपरिचर्याकरणयोग्यस्तदेकभोगस्तत्पादौ परिचरिष्यामि ? कदा मां भगवान् स्वकीयया अतिशीतलया दृशावलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यति ! इति भगवत्परिचर्यायामाशां वर्धयित्वा तयैवाशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य, दूरादेव भगवन्तं शेषभोगे श्रिया सहासीनं वैनतेयादिभिः सेव्यमानम् ' समस्तपरिवाराय श्रीमते नारायणाय नमः ' इति प्रणम्योत्थायोत्थाय पुनः पुनः प्रणम्य, अत्यन्तसाध्वसविनयावनतो भूत्वा, भगवत्पारिषद्गणनायकैर्द्वारपालैः कृपया स्नेहगर्भया दृशा अवलोकितः, सम्यगभिवन्दितैस्तैस्तैरेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण ' मामैकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्व ' इति याचमानः प्रणम्य, आत्मानं भगवते विनिवेदयेत् ॥

ततो भगवता स्वयमेवात्मसंजीवनेनामर्यादशीलवता अतिप्रेमान्वितेनावलोकनेनावलोक्य सर्वदेशसर्वकालसर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतोऽनुज्ञातश्च अत्यन्तसाध्वसविनयावनतः किंकुर्वाणः, कृताञ्जलिपुटो भगवन्तमुपासीत ॥

भिप्रैति, आनन्दप्रचुरपर्यङ्कभाषया तात्पर्यात् । यच्च तत्पादाम्बुजद्वयं प्रवेक्ष्यामि इति मुमुक्षोरभिसन्धिरुच्यते, तत्र पूर्वोक्तस्य शिरसा समाश्रयस्य साक्षात्तमत्र प्रवेशशब्देनाभिप्रेतम् ॥

यदीय शेषभावाय स्वीकृतः इति, तत्र यावदात्मभावि कैङ्कर्याय सर्वाल्पत इत्यर्थः । एवमत्यर्थो गर्भं सुगमतम ॥

ततश्चात्यन्तानुभूयमानभावविशेष, निरतिशयप्रीत्या अन्यत्किंचित्कर्तुं द्रष्टुं स्मर्तुमशक्त, पुनरपि शेषमात्रमेव याचमान, भगवन्तमेवाविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत ॥

ततो भगवता स्वयमेवात्मसंजीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापह निरतिशयसुखावहमात्मीय श्रीमत्पदारविन्दयुगल शिरसि कृत ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयव सुखमासीत ॥

इति श्रीभगवद्रामानुजविरचित
श्रीवैकुण्ठगद्य सम्पूर्णम् ॥
गद्यत्रय समाप्तम् ॥
श्रीमते रामानुजाय नम ॥

---

द्वयवचनधर्मानां हि अयोगानपेक्षे
मुषितनिखिलदोषे मुक्त्युपाये स्थितानाम् ।
अमृतमिव पयोधेराप्तमेतद्यतीन्द्रा
दशृणुत मितगद्य वेङ्कटेश सुमेधा ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीमद्रहस्यरक्षाया
मितगद्याधिकारो द्वितीय ॥
गद्यत्रयभाष्य सम्पूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नम ॥

श्रीमते निगमान्तमहादेशिकाय नम ।



॥ श्री ॥

# श्रीमद्भाष्यत्रयभाष्योपात्तप्रमाणग्रन्थानां नामानि तत्सत्संकेताक्षराणि च ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| अष्ट | अष्टश्लोकी | धातु | धातुपाठ |
| अष्टा | अष्टाध्यायी | नाम | नामलिङ्गानुशासनम् |
| अहि | अहिर्बुध्न्यसंहिता | नित्य | नित्यग्रन्थ. |
| आप | आपस्तम्बधर्मसूत्रम् | निरु | निरुक्तम् |
| इ-स | इतिहाससमुच्चय | नी-सू | नीलासूक्तम् |
| ईश्व | ईश्वरसंहिता | न्याय | न्यायतत्त्वम् |
| क व | कठवल्ली | पर | परमसंहिता |
| काश्य | काश्यपसंहिता | पाञ्च | पाञ्चरात्रम् |
| कौषी | कौषीतकोपनिषत् | पौष्क | पौष्करसंहिता |
| ग-श्रु प्र | गद्यश्रुतप्रकाशिका | बृह | बृहदारण्यकम् |
| गी-भा | गीताभाष्यम् | ब्र पु | ब्रह्मपुराणम् |
| गी स | गीतार्थसंग्रह | ब्रह्म | ब्रह्मकैवर्तम् |
| चतु | चतुः श्लोकी | भ गी | भगवद्गीता |
| छा | छान्दोग्यम् | भरत | भरतलक्षणवाक्यम् |
| जित | जितन्तेस्तोत्रम् | भ स्मृ | भरद्वाजस्मृति |
| तल | तलवकारोपनिषत् | भाग | श्रीभागवतम् |
| तै | तैत्तरीयम् | मनु | मनुस्मृतिः |

* बहुत्र प्रानुषङ्गिकप्रयोगेन कुम्भघोणमुद्रिते व्यासरामायण श्रीमन्महाभारतपु-
राणे, तस्मानिनमुद्रित श्रीविष्णुपुराणपुस्तक पत्रसंख्यास्च आकरा निर्दिश्यते ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| मन्त्र | मन्त्रविशेष. | शैव | शैवपुराणम् |
| महा | महाभारतम् | शौन | शौनकसंहिता |
| महो | महोपनिषत् | श्रीगुण | श्रीगुणरत्नकोशः |
| मुक्त | मुक्तवाक्यम् | श्रीभा | श्रीभाष्यम् |
| मुण्ड | मुण्डकोपनिषत् | श्रीर | श्रीरङ्गराजस्तवः |
| मैत्रा | मैत्रायणीयोपनिषत् | श्रीवैकु | श्रीवैकुण्ठस्तवः |
| यास्क | यास्कनिरुक्तम् | श्रीसू | श्रीसूक्तम् |
| रह | रहस्याम्नायब्राह्मणम् | श्रीस्त | श्रीस्तव. |
| रा | रामायणम् | श्वेता | श्वेताश्वतरोपनिषत् |
| ल त | लक्ष्मीतन्त्रसंहिता | षड | षडर्थसंक्षेप· |
| वरद | वरदराजस्तव. | सन | सनत्कुमारसंहिता |
| व-पु | वराहपुराणम् | सवि | सवित्सिद्धिः |
| वा पु | वामनपुराणम् | सात्व | सात्वतसंहिता |
| वि त | विष्णुतत्वसंहिता | सुबा | सुबालोपनिषत् |
| वि ध | विष्णुधर्मः | स्तोत्र | स्तोत्ररत्नम् |
| वि-पु | विष्णुपुराणम् | स्वाय | स्वायंभुववचनम् |
| वे स | वेदार्थसंग्रह | हनु | हनुमन्नाटकम् |
| शारी | शारीरकसूत्रम् | | |



॥ श्रीः ॥

# प्रकरणसंकेताक्षराणि ॥

---

| संकेताक्षराणि | ग्रन्थनामानि |
|---|---|
| अयो | अयोध्याकाण्डः |
| अरु | अरुणशाखा |
| आदि | आदिपर्व |
| आन | आनन्दवल्ली |
| आनु | आनुशासनिकपर्व |
| आर | आरण्यकाण्डः |
| आश्व | आश्वमेधिकपर्व |
| उ-श | उत्तरशतकम् |
| उत्त | उत्तरकाण्डः |
| उद्यो | उद्योगपर्व |
| उप | उपनिषत् |
| कर्ण | कर्णपर्व |
| क-शा | कठशाखा |

| संकेताक्षराणि | ग्रन्थनामानि |
|---|---|
| कि | किष्किन्धाकाण्डः |
| बा | बालकाण्डः |
| ब्रा | ब्राह्मणम् |
| भी | भीष्मपर्व |
| भृ | भृगुवल्ली |
| मोक्ष | मोक्षधर्मः |
| यु | युद्धकाण्डः |
| ल स | लक्ष्मीसहस्रनाम |
| वन | वनपर्व |
| शा | शान्तिपर्व |
| शी | शीक्षावल्ली |
| सह | सहस्रनामाध्यायः |
| सु | सुन्दरकाण्डः |



॥ श्री ॥

# श्रीमद्गुणत्रयभाष्योपात्तानां प्रमाणानाम् आकरप्रदर्शिका ॥

---

| प्रमाणानि | पुट | प्रमाणस्थानानि |
|---|---|---|
| **अ** | | |
| अक्षरधियाम् | २३ | शारी ३ ३ ३३. |
| अगतीनाम् | ४४ | नि ध ४ ४९ |
| अचेतना | ७६ | पर २ |
| अज सर्वे | २६ | महा-शह ११ |
| अशो जन्तु | ५५ | महा-शा १२ ३६ |
| अण्ड भित्त्वा | ३६ | ल-त |
| अतसीपुष्प | ३१ | महा उद्यो ९४ ६५ |
| अतीव राम | ८ | रा-या ७७ ३३ |
| अथातोऽह | ५७ | छा ७ २५ १ |
| अथोपाय | ५२ | ल-त १७ १०३ |
| अधर्म धर्म | २० | भ गी १८ ३२ |
| अनन्तनाम | ११ | आ पु |
| अनन्तो देश | ४० | पाञ्च |
| अनन्यसाध्ये | २० | भरत |
| अनन्या राघ | ४ | रा सु २१ १५ |
| अनन्या हि | ४ | रा सु १२१ २० |
| अनपह्नव | १० | ल त १७ ३१ |
| अनारब्ध | ५० | शारी ४ १ १५ |

| प्रमाणानि | पुट | प्रमाणस्थानानि |
|---|---|---|
| अनिच्छन्न | ८० | स्तोत्र ५९ |
| अनेकजन्म | ६४ | भ गी ६ ४५ |
| अनेकदिव्या | ३२ | भ-गी ११ १० |
| अन्त प्रविष्ट | ६० | तै अष्ट ३ ११ २ |
| अन्यत्र क्षुप | ४ | वि पु ६ ५ ७७ |
| अन्येषु चान | १० | वि पु १ ९ १४४ |
| अपि चेत्सु | २७ | भ गी ९ ३० |
| अपि पापेषु | २७ | वि-ध |
| अपुनर्भवाय | ६४ | मुबा ११ |
| अपूर्वरूप | २४ | वि-पु १ ९ ६६ |
| अप्यह जी | २९ | रा आर १० १९ |
| अप्रमेय हि | ८ | रा-आर ३७ १८ |
| अभियाता | २९ | रा अयो १ ३० |
| अभिषिच्य | ३० | रा बा १ ८५ |
| अमानित्व | ७५ | भ गी १३ ८ |
| अमृत सा | ४७ | पाद्म |
| अर्चापि लो | २४ | पाद्म |
| अर्च्य सर्व | ७२ | श्रीर-उ श ७४ |
| अर्धो विष्णु | ६ | वि पु १ ८ १८ |
| अर्हति | ६ | रा सु १६ ५ |
| अलमेषा | १२ | रा सु २७ ४४ |
| अविभागेन | ७२ | शारी ४ ४ ४ |
| असदेशात् | ११ | रा-सु २२ २० |
| अस्मान् वेग | ४२ | महा उद्यो ७२ १०१ |
| अस्या देव्या | ५ | रा-सु १५ ५२ |

| प्रमाणानि | पुट | प्रमाणस्थानानि |
|---|---|---|
| अस्या मम | ६ | ऋ-त |
| अस्येशाना | ७ | यजु ४ ४ १२ ५७ |
| अदमस्म्यप | १० | ४४ अदि ३७ |
| अहकार | ५७ | भ गी ३ २७ |
| अह बीज | ४७ | भ गी १४ ४ |
| अह त्वा | ५६ | भ-गी १८ ६६ |
| अह गो | २७ | वि पु ५ १३ १२ |
| **आ** | | |
| आचार्यमु | ७३ | आप १ २ ६ १३ |
| आमदास्य | ५३ | रि त |
| आमावेन | ३१ | महा भा १०६ ११ |
| आत्मात्मीय | २० | ऋ-त १७ ७१ |
| आदित्यवर्ण | ७४ | तै अर ३ १३ २ |
| आनन्दादयः | ७२ | शारी ३ ३ ११ |
| आदृशस्य | ३० | ग-अयो २३ १२ |
| आनृशस्य | १० | रा-मु ३८ ४१ |
| आत्तो विष्णो | १३ | पौष्क |
| आर्तोपच्छ | १६ | मुक्त |
| आर्तो वा यदि | ५९ | रा-मु १८ २८ |
| आर्द्रा पुष्क | ८ | श्री सू १३ |
| आवि स्सुर्मम | १८ | अष्ट ३ |
| आद्यु स्वैरनु | ६ | चतु ४ |
| **इ** | | |
| इच्छात एव | .. ६९ | श्रीवैकु ३६ |
| इय तु भवत | .. १० | रा आर १३ ७ |

| प्रमाणानि | पृष्ट | प्रमाणस्थानानि |
|---|---|---|
| **ई** | | |
| ईश्वरी सर्व | ७ | श्री सू ९ |
| **उ** | | |
| उत्पत्ति प्रल | ४ | वि पु ६ ५ ७८ |
| उदाराम् | १४ | श्री-सू ५ |
| उदारा सर्वे | ४४ | भ-गी ७ १८ |
| उपादत्ते | ६९ | श्रीर उ श्र ५७ |
| उपाय सुक | ३ | ल-त १७ १०४ |
| उपाये गृह | १३ | अहि ३६ ४४ |
| उभयाधिष्ठा | ६ | षड स |
| उरसा प्रति | २८ | महा |
| **ऋ** | | |
| ऋच सामानि | १३ | तै ब्रा १ २ १ २६ |
| ऋजुबुद्धि | २८ | रा आर १७ १५ |
| **ए** | | |
| एकधा भवति | १८ | छा ७ २६ २ |
| एकाक्षर | ५० | |
| एकान्तिन | ३६ | वि पु १ ६ ३९ |
| एकोऽपि कृष्णे | ४२ | महा शा ४६ १२३ |
| एको ह वै | ४ | महो १ १ १ |
| एतत्साम | १७ | तै-उप भृ १० ५ ९ |
| एतच्छिद्रस्य | ७७ | |
| एतस्य वा | ६० | बृह ५ ८ ९ |
| एते वै निर | ३६ | महा-मोक्ष २४ |
| एष सर्वे | २६ | बृह ६ ४ २२ |

| प्रमाणानि | | पुट | प्रमाणस्थानानि |
|---|---|---|---|
| एष सप्र | .. | ६४ | छा ८ ३ ४. |
| एष सेतुः | .. | २६ | कौपी ३ ९. |
| एष ह वा | | २८ | कौषी ३ ९. |
| एह्येहि फु | .. | २८ | महा-भी ५९ ९८. |
| ऐ | | | |
| ऐश्वर्यम | . | १४ | श्रीगुण ५८. |
| क | | | |
| कच्चिन्न तत् | | ३३ | रा-सु ३६ २८. |
| कपोले जान | .. | २९ | हनु ३ ५३ |
| कलामुहू | | ३७ | वि पु ४ १ ८४. |
| कामक्रोध | | ५८ | वि-पु ६ ५ ५. |
| काल स पच | | ३७ | महा-मोक्ष २४. |
| कुठि गति | .... | ३६ | धातु-म्वादि |
| कुरुष्व मा | ... | ४२ | रा अयो ३१ २४ |
| कुशली यदि | . | ३३ | रा-सु ३६ १३ |
| कृतकृत्याः | .. | ६३ | महा-आश्व १०९ |
| कृताभिषेका | . | ११ | नाम २ ६ ५ |
| कृतार्थोऽस्मि | | १७ | |
| कृपामय | ... | ८० | वि ध |
| कृष्णरूपा | ... | ३३ | पाञ्च |
| क्रीडतो वा | . | ३८ | वि-पु १ २ १८ |
| क्रीडार्थम | .. | ९ | महा |
| क्रीडाहरे | | ३८ | महा शा २०६ ५९ |
| क्लेशकर्म | .. | ७० | मविनिमिद्दि. |
| क्लेशेन मह | ... | ६४ | ल-त १७ ११. |

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| क्षपयित्वा | .... | ६४ | ल त १७ १७. |
| **ग** | | | |
| गच्छानुजा | ... | ४१ | रा-यु ५९ १४४. |
| गन्धद्वाराम् | ... | ८ | श्रीसू ९. |
| गरीयान् पू | ... | ४७ | गी-भा ११ ४३. |
| गरीयान् ब्र | .. | ४७ | मनु २ १४६ |
| गुणमाया | ... | ५२ | जित |
| गुणाढ्य | ... | ६ | रा-बा ७७ २७ |
| गुणाः प्रकृ | .. | ५३ | भ गी १४ ५ |
| गुणैर्दास्य | ... | ३५ | रा-कि ४ १२ |
| गुशब्दस्त्वन्ध | ... | ४७ | निरु |
| गुहेन स | ... | २७ | रा बा १ ३० |
| गोविन्देति | . | ३० | महा-उद्यो ४७ ३९ |
| **घ** | | | |
| घनकनक | ... | ६ | श्रीगुण ३५ |
| **च** | | | |
| चकर्थ यस्या | ... | ५ | स्तोत्र ३७ |
| चञ्चलं हि | ... | ८० | भ गी ६ ३४ |
| चतुर्मुखा | ... | ३० | वरा ५७ ७ |
| चतुर्विधा | .... | १६ | भ-गी ७ १६. |
| चन्द्रां प्रभा | ... | १३ | श्रीसू ५. |
| **छ** | | | |
| छिन्न भिन्न | . | २९ | रा यु ९४ २२. |
| **ज** | | | |
| जक्षत्क्रीड | | १७ | छा ८ १२ ३. |

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| जगत्प्रकृति | ... | २७ | अहि २. |
| जगदेतत् | ... | ३८ | वि-पु ५ १९. |
| जनयन्प्र | ... | २९ | रा या १ ६५. |
| जन्माद्यस्य | . | ३७ | शारी १ १ २. |
| जायमान | ... | ८० | महा-शा ३५८ ७३. |
| ज्ञात मया | ... | ४४ | |
| ज्ञानशक्ति | .. | ९ | वि पु ६ ५ ७९. |
| ज्ञानी तु पर | ... | ८५ | गी स २९. |
| ज्योतींष्यादि | ... | २७ | महा-उद्यो ९४ ४५. |
| **त** | | | |
| ततस्त म्रि | | ६२ | वरा रह. |
| ततः सा ह्री | ... | १२ | रा-सु ५८ ९२. |
| ततोऽवलोकि | | ८ | वि-पु १ ९ १०६. |
| तत्पादभक्ति | ... | ५४ | अहि |
| तत्सवितुः | | २६ | तै अरु १ ११ २. |
| तदेकोपा | ... | ७९ | भरत |
| तदेतत्स | | ४ | पाद्म |
| तद्गुणसार | ... | ५३ | शारी २ ३ २९. |
| तद्विज्ञानार्थं | ... | १३ | मुण्ड १ २ १२. |
| तया सहासी | | | स्तोत्र ३९. |
| तमसः पर | | | रा यु ११४ १५. |
| तमीश्वराणा | | | श्वेता ६ ७. |
| तव भरोऽह | | | श्रीर-उ ग १०२. |
| तवानन्त | | | । ७५. |
| तस्य ताम्र | | | । वन १९१ १३३. |

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| तस्य ताव | ... | ६२ | छा ६ १४ २. |
| तस्य स्वात्म | ... | ५९ | |
| तस्य ह वा | ... | २४ | बृह ४ ३ ६. |
| तस्मात्परि | .. | ४४ | रा-यु ५९ १४३. |
| त विना कैक | ... | २८ | रा-यु १२४ ६. |
| तामर्चयेत् | ... | ८२ | वि-ध २००. |
| तावदार्तिः | ... | १६ | वि-पु १ ९ ७३. |
| तावन्ति च | ... | १८ | वि-पु ५ ३१ १८. |
| तां पद्मनेमीं | ... | ८ | श्रीसू ५. |
| तुल्यशील | ... | ५ | रा-सु १६ ५. |
| तेजस्त्वन्या | ... | २७ | अहि |
| तेजोबलै | ... | २२ | वि-पु ६ ५ ८५. |
| तेन मैत्री | ... | २१ | रा सु २१ २०. |
| तेनाश्चर्य | ... | २४ | वि पु ५ १९ ७. |
| तेषां ज्ञानी | .. | ५९ | भ गी ७ १७. |
| तेषा तत्र | .. | ३६ | वि-पु १ ६ ३९. |
| तेषा तु त | ... | १५ | अहि |
| त्रिभावभा | .. | ६४ | वि-पु ६ ७ ७६. |
| त्वत्पादक | ... | ७७ | जितते |
| त्वदङ्घ्रिमुद्दि | . | ३० | स्तोत्र २८. |
| त्वमेव मे | . | १९ | कौपी ३ १. |
| त्वया देवि | | ११ | वि पु १ ९ १२३. |
| त्वयापि ल | .... | ४२ | स्तोत्र २४. |
| त्वयावलो | .. | ८ | वि-पु १ ९ १३०. |
| त्वयि निहि | ... | २० | वरद ९१. |

| प्रमाणानि | | पुटः | प्रमाणस्थानानि |
|---|---|---|---|
| त्वं माता सर्व | .. | ११ | वि पु १ ९ १२६. |
| **द** | | | |
| दया सर्वेषु | . | ७५ | वि पु ३ ८ ३५. |
| दारुण्यमि | .. | ७६ | वि-पु २ ७ २८. |
| दासभूताः | .. | ६३ | ईश्व ३. |
| दिवि सूर्य | . | २५ | भ गी ११ १२. |
| दिव्य स्थान | ... | ३६ | महा |
| दुरत्यया | | ५८ | भ गी ७ १४. |
| दुर्गसंसार | . | ४२ | वि-ध |
| दुर्लभाभ | | ५५ | पौष्क |
| दुष्कर कृत | .. | ३३ | रा सु १५ ५३ |
| दुष्टेन्द्रिय | . | ८३ | मात्व |
| देवाना गुह्य | | १९ | तै-उप २ ५१. |
| देवाना दान | ... | ७७ | जित-ते |
| देवि त्वन्म | .. | ७ | श्रीस्तव ८. |

| प्रमाणानि | | पृष्ठः | प्रमाणस्थानानि |
|---|---|---|---|
| न | | | |
| न कर्मणा | ... | ३० | क-शा ३ ९ ७. |
| न क्षमामि | ... | ५० | वरा |
| न जीवेय | .. | ३३ | रा-सु ६६ १०. |
| न तत्र सूर्यः | ... | २७ | क-व ५ १५. |
| न तत्समश्च | ... | ७ | श्वेता ६ ८. |
| न तस्य प्राक् | ... | २४ | व पु १४ ४१. |
| न तस्येशेक | ... | ४८ | तै-उप २ १ ३. |
| न ते वर्णे | ... | ८ | वि-पु १ ९ १२३. |
| न त्वत्समो | .. | ७ | भ गी ११ ४३. |
| न त्वह ता | ... | ३३ | रा-आर ६२ १७. |
| न त्व सुत! | .... | ४२ | |
| न धर्मनिष्ठः | ... | ४४ | स्तोत्र २२. |
| ननु प्रपन्नः | ... | २१ | स्तोत्र ६४. |
| न भूतसङ्घ | ... | २४ | महा शा २०६ ६०. |
| नमामि सर्वे | ... | ११ | वि-पु १ ९ ११७. |
| न मे पार्थ | ... | ३० | भ गी ३ २२. |
| नरसवन्वि | ... | ४ | अहि ५२. |
| नरात्राता | ... | २२ | महा-आनु १८६ ७. |
| न स्मरत्यप | . | ३० | रा अयो १ ११. |
| नाकस्य पृष्ठ | ... | ३६ | तै-उ २ १ ७. |
| नाकुण्डली | .. | ३१ | रा बा ६ १०. |
| नागभोगे | ... | ३३ | नित्य |
| नाधृनाधृ | ... | ३६ | धातु भ्वादिः |
| नानयोर्विद्य | ... | ६ | वि पु १ ८ ३५. |

तरङ्गिणी

भास्करादिभिरपि भ्रमप्रमाविभागाय रजतस्य घटादिवैलक्षण्यमङ्गीकृतमेव, इति तन्मतेऽपि तस्य पक्षबहिर्भावस्यावश्यं वाच्यत्वात्, तार्किकादिमते स्वमते च तदुपरक्तौ साध्यसिद्धिः प्रयोजनम्, इति सर्वमतेऽपि सप्रयोजनं विशेषणम्। विशेषणत्वे प्रयोजनवत्त्वं तन्त्रम्, न तु विशेषणप्रयोजनस्य सर्वसिद्धत्वमपि। सत्यत्वबाधनेकमतानुसारिणः कुदालस्यैकस्य मिथ्यात्वादिना कथायामभावादिति सर्वमनवद्यम्॥ *प्रतिपन्नेति*॥ अत्र त्रैकालिकनिषेधेत्यनेनात्यन्ताभाव एव विवक्षितः। तथा चान्योन्याभावमादाय सिद्धसाधनम्, तद्वारणाय निषेधपदस्यात्यन्ताभावपरत्वे च 'त्रैकालिके'ति च व्यर्थमिति शङ्कानवकाशः। 'प्रतिपन्ने'ति च घटादावत्यन्ताभावप्रतियोगित्वमिति मते घटादावेव सिद्धसाधनवारणाय। प्रतिपन्नत्वं च प्रतीतत्वमात्रम्; अतः प्रमाप्रतिपन्नत्वं भ्रमप्रतिपन्नत्वं वाऽऽदाय न विरोधः सिद्धसाधने। यावत्त्वं च विवक्षितम्; अतो भ्रमप्रतिपन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमादाय सत्त्वपक्षे न सिद्धसाधनम्। *ननु*—स्वाधिकरणाभिमतयावन्निष्ठात्यन्ताभाव-

न्यायामृतकण्टकोद्धारः

एवमप्यपारमार्थिकत्वाकारेण घटादेरप्युक्तनिषेधप्रतियोगित्वाङ्गीकारेण सिद्धसाधनं तदवस्थमेवेत्यत आह—*पारमार्थिकत्वाकारेणेति*॥ *ननु*—येन सम्बन्धेन यदवच्छेदेन यत्र यदस्ति, तत्र सर्वत्र तस्य पारमार्थिकत्वेनैव सत्त्वात् तेन रूपेण त्रैकालिकनिषेधप्रतियोगित्वं प्रतिवादिमतेऽप्रसिद्धमिति—चेत्, *न*, येन सम्बन्धेन यत्र यत् प्रतीतमित्यर्थस्य विवक्षितत्वात्, तस्य च शुक्तिरूप्यादौ प्रसिद्धत्वात्। न च—सर्वत्र यद् येन सम्बन्धेन प्रतीतम्, तन्निष्ठत्रैकालिकनिषेधप्रतियोगित्वं तेन रूपेणाप्रसिद्धमिति—वाच्यम्; एवमपि तत्त्ववादिनं प्रति प्रसिद्ध्युपपत्तेः, तेन शुक्तिरूप्यादेस्तथाभावाङ्गीकारात्॥

*ननु—तत्त्ववादिनं प्रत्यत्यन्ताभावप्रतियोगित्वमात्रं साध्यमस्तु, तेनासत एव तत्प्रतियोगित्वाङ्गीकारेण पक्षे तदनङ्गीकारात्। न च—उद्देश्यसिद्ध्यर्थमेतानि विशेषणानीति—वाच्यम्; एतादृशोद्देश्यत्वस्य सर्वत्र वक्तुं शक्यत्वेनातिप्रसङ्गात्, साध्य उपरञ्जकविशेषणस्यासाम्प्रदायिकत्वाच्चेति—चेत्, यथा तार्किकमतेऽत्यन्ताभावप्रतियोगित्वं सत्त्वेऽप्युपपन्नम्, तथा मन्मतेऽपि भविष्यतीत्यर्थान्तरनिरासकत्वेन तत्त्ववादिमते सार्थकत्वम्। यद्वा—तार्किकस्यापि प्रतिवादित्वेन तन्मताभिप्रायेणैवैतादृशसाध्यकरणात् न कश्चिद् दोष इति सर्वं समञ्जसम्॥

गौडब्रह्मानन्दी ( लघुचन्द्रिका )

*वस्तुतस्तु*—रजभेदो न प्रतियोगितावच्छेदकतया भाति, किन्तूपलक्षणतया किञ्चनपदार्थे प्रकारः। तथा च तत्पदस्य सर्वनामतया प्रसिद्धार्थतया प्रत्यक्षादिमानसिद्धव्यक्त्यादिविनिगमकबोधकत्वेन प्रसिद्धार्थकत्वात् प्रमाणान्तार्थ

विट्ठलेशोपाध्यायटिप्पणी

*प्रपञ्चेति*॥ *अत्यन्ताभावे*=तद्वृत्तिताधेयत्वे। मास्तु तत्र द्वैतकालावच्छिन्नत्वभावम्, द्वैतावच्छिन्नत्वभावं तु भवेदित्याशङ्कां समाधत्ते—*तादृशाभाव इति*॥ *तादृशावच्छिन्नेति*॥ द्वैतावच्छिन्नेत्यर्थः। *उद्देश्यम्*=प्रकृतिद्वैतकालावच्छेदेन द्वैताभाववत्त्वम्, तस्य सिद्धेरित्यर्थः। समानदेश-कालीनयोरेवावच्छेद्यावच्छेदकभावोपगमादिति भावः। अत्र परेषां संवादमाह—*नहीति*॥ *तत्र*=द्वैताभावे॥ तत्=द्वैतावच्छिन्नत्वमिति व्याख्येयम्। द्वैतस्य घटत्वेनोद्देश्यतावच्छेदकतया महाभिन्नत्वेन वाऽभावप्रतियोगितया आत्मस्वीकारेणाद्वैतश्रवणाधीनसिद्ध्याद्यविषयत्वेन 'नेदं'ति वाक्यार्थाभिमतविषयत्वस्याप्यावश्यकत्वस्य वारणसम्भवेऽपि प्रकारान्तरेण तस्य तद् वारयति—*वस्तुतस्त्विति*॥ *महाभेद इति*॥ मानावपदार्थभूतेत्यादिः। *किञ्चनपदार्थ इति*॥ लघुपदे वक्ष्यमाण इति शेषः। *तत्पदस्य*=किञ्चनपदान्तर्गतकिंपदस्य; किञ्चनेति सङ्घुल्यायसर्वनामतया यथाश्रुतासङ्गतेः। घनेति तु तात्पर्यग्राहकमिति भावः। 'बोधकत्वेने'ति मिथ्यात्वज्ञाने हेतुतयाऽन्वेति। *प्रसिद्धेति*॥ पक्षाकान्तद्गमविषयस्य घटपदप्रबोधकत्वे हेतुः,